( नान्द्यन्ते )

**सूत्रधारः**—अलमतिविस्तरेण । अद्य खलु भगवतः कालप्रियनाथस्य यात्रायामार्यमिश्रान्विज्ञापयामि—एवमत्रभवन्तो विदांकुर्वन्तु । अस्ति खलु तत्रभवान्काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जातूकर्णीपुत्रः ।

---

क्षीत्वोपपत्तिः । प्रयोजकतासंबन्धेन मोक्षवतीमित्यर्थः । रामायणादिना मोक्षप्रयोजकत्वं च 'एकैकमक्षरं प्रोक्तं महापातकनाशनम्, इति स्फुटम् । अत्र हेतुमाह—आत्मनः कलां परमात्मप्रतिपादकविद्याम् । विद्यायां कालभेदे च मुक्तौ शिल्पे कलेति च इति वैजयन्ती । रामायणादिकं परमात्मप्रतिपादकत्वं च 'वेदवेद्ये परे पुंसि इत्यादौ स्पष्टम् । रामायणाध्यात्मरामायणरूपां वन्देमहि प्रणमाम । 'विषयमङ्गलद्वयसंग्रहो विजयते इति बालरामायणनाटके स्फुटम् । अस्यां योजनायां पूर्ववत्काव्यार्थसूचनं बोद्धव्यम्" । नान्दीलक्षणं तु—'यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा' इत्यादि दशरूपकादिषु स्फुटम् । नाटकलक्षणं च—'वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते । प्रख्यातनायकोपेतं नाटकं तदुदाहृतम् ॥' इति । यद्यपि करुणरस एवास्मिन्नाटके प्रधानमिति सर्वजनीनं सूचितं, मरणस्य प्रसक्तिपूर्वकप्रतिषेधो नाटकप्रतिपाद्य इति सूचयता नान्दीस्थामृतपदेन करुण एवास्मिन्नाटके प्रधान इति तथापि वीरशृङ्गारौ प्रायिकौ इत्युक्ते न दोष इत्याहुः । पूर्वरङ्गलक्षणं तु—'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥' इति । प्रस्तावनालक्षणं तु—सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् । स्वकार्यप्रस्तुताक्षेपिचित्रोक्त्या यत्तदामुखम् ॥ प्रस्तावना वा तत्र स्यात्' इति । **नान्द्यन्त इति** । नान्द्याः पूर्वोक्ताया अन्ते समाप्तौ सूत्रधारः प्रविश्याहेति शेषः । तदुक्तम्—'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमासूत्रयेन्नटः ॥ इति ॥ प्ररोचनां प्रस्तोतुं सामाजिकाभिधानायाह—**अद्य खलु भगवत इति** । भगवतो ज्ञानशक्त्यादिगुणवतः कालप्रियानाथस्य कालप्रियानामाम्बिकाया नाथः शिवस्तस्य । इयं च कथा पौराणिकी वेदितव्या । यात्रायामुत्सवे आर्याः पूज्या मिश्रा ज्ञानिनस्तथाविधान्विज्ञापयामि । एवं वक्ष्यमाणप्रकारेण अत्रभवन्तः । पूज्याः यूयम् । अत्रभवत्तत्रभवच्छब्दौ पूज्यार्थौ इत्युक्तेः । विदांकुर्वन्तु । 'विदांकुर्वन्त्वि-

कश्यपो भवति' इति सर्वज्ञतया श्रुतिप्रसिद्धकश्यपवंश्यः। श्रीकण्ठ इति पदं शब्दः लाञ्छनं यस्य स तथोक्तः। श्रीकण्ठनामक इत्यर्थः। 'द्वादशेऽहनि पिता नाम कुर्यात्' इति पैतृकं नामधेयमिदम्। पदवाक्यप्रमाणज्ञः। व्याकरणन्यायमीमांसापरिज्ञातेत्यर्थः। भवभूतिर्नाम भवभूतिरिति प्रसिद्ध-नामवान्। एतत्कृत 'साम्बा पुनातु भवभूतिपवित्रमूर्तिः' इति श्लोकश्रवण-संतुष्टो राजा भवभूतिरित्येनं ख्यापयामासेति कथात्रानुसंधेया। किंचास्मै कवये ईश्वर एव भिक्षुरूपेणागत्य भूतिं दत्तवानिति वदन्ति। एवं च भवाद्भगवतो भूतिर्यस्येति भवभूतिरित्यन्वर्थ इत्याहुः। यमिति। ब्रह्माणम्। यजना-दिषट्कर्मनिरतमित्यर्थः। लाक्षणिकोऽयं मुख्यार्थपरत्वे प्रयोजनाभावात्। तथाविधं यं भवभूतिमियं देवताप्रसादादिना साध्यत्वेन प्रसिद्धा वाग्देवी वश्या सत्येव विधिप्रतिषेधग्राही सत्येवान्ववर्ततानुवर्तितवती। यद्वा ब्रह्माणं यमेव वश्या सत्यन्ववर्तत। न त्वन्यमित्यर्थः। पूर्वस्मिन्नर्थे वश्येवान्ववर्तत न त्ववश्यान्व-वर्तत। अलाभेन कालिदासादिषु स्वयमवश्यैव कालिदासप्रभृत्यनुरोधेनागतया वाग्देव्या यदनुवर्तनं तद्व्यावर्तते। अत्र 'यं ब्रह्माणमियं देवी वाग्वश्ये-वान्ववर्तत' इति द्वितीयान्तब्रह्मशब्देन इवशब्देन च युक्तं पाठान्तरमपि क्वचिद्दृश्यते। तत्रायमर्थः—इयं वाग्देवी यं भवभूतिं ब्रह्माणमिव स्वभर्तारं चतुर्मुखमिव वश्या सत्यन्ववर्ततानुवर्तितवती। देवस्य स्त्री देवी। दीव्यति प्रकाशयति प्रकाशते इति वा देवी। 'देवट्' इति टित्वात् ङीप्। यद्वा—यं देवी यादृशभवभूतिविषयकेच्छावती सती इयं वाग्देवी ब्रह्माणं वश्येवान्वव-र्तत। वश्यानुवर्तनाभिनयमात्रं स्वभर्तरि भावबन्धस्तु भवभूतावेवेति भावः। स्वयंवरं कृतवतीत्यर्थः। दिवुधातोः 'कान्तिगतिषु' इत्युक्तेः इच्छायां वृत्तिः। दीव्यति कामयत इति देवीति कृदन्तदेवीपदयोगेऽपि। परंत्वत्र पाठे व्यवहितान्वयो दोष इत्याहुः। 'उत्तररामचरितं यत्प्रणीतं प्रयोक्ष्यते' इति यच्छब्दपाठ इति मत्वा यं वाग्देव्यन्ववर्तत यत्प्रणीतं प्रयोक्ष्यतेऽभि-नेष्यते स भवभूतिर्नाम कविः अस्तीति पूर्वेणान्वयः। यत्तदोर्नित्यसंबन्धात्स इत्यस्य लाभ इति केचित्। परे तु 'तत्प्रणीतम्' इति तच्छब्दयुक्तमेव पाठमुपष्टभ्य 'इयं वाग्देवी यं भवभूतिमन्ववर्तत स भवभूतिर्नाम कविरस्ति।

एषोऽस्मि कार्यवशादायोध्यिकस्तदानीतनश्च संवृत्तः । ( समन्तादवलोक्य । ) भो भो यदि तावदत्रभवतः पौलस्त्युकुलधूमकेतोर्महाराजरामस्यायमभिषेकसमयो रात्रिंदिवमसंहृतानन्दनान्दीकस्तत्किमिदानीं विश्रान्तचारणानि चत्वरस्थानानि ।

( प्रविश्य )

**नटः**—भाव प्रेषिता हीतः स्वगृहान्महाराजेन लङ्कारसमरसुहृदो

---

प्रतीत्यनापत्तेश्च' इति वदन्ति । इयं प्ररोचना प्रस्तुता । तदुक्तम्—' निवेदनं प्रयोज्यस्य निर्देशो देशकालयोः । कविकाव्यनटादीनां प्रशंसा तु प्ररोचना ॥ २ ॥ **एषोऽस्मीति** । कविवशात्कव्यनुरोधेनायोध्यकः । अयोध्यासंबन्धिक इत्यर्थः । ' धन्वयोपधाद्वुञ् ' इति सूत्रेण वुञ् । तस्याकादेशश्च । तदानीतनश्च रामपट्टाभिषेककालीनश्च संवृत्तोऽस्मीति योजना । निष्पन्नोऽस्मीत्यर्थः । अयमाशयः—यद्यपि भोजराजगतरीत्या सूत्रधारनटीप्रभृतिभिः प्रकृतदेशकालावलम्बिनीं प्रस्तावनामुक्त्वा सूत्रधारादीन्निष्कास्य भूमिकां प्रवेश्य प्रवर्तिष्यमाणकाव्याभिनयकथासूचकविष्कम्भो वक्तव्यस्तथापि सूत्रधारस्यैव काव्यकथाघटकदेशकालसंबन्धमङ्गीकृत्य विष्कम्भवर्ण्यकथोपन्यासः सूत्रधारात्वापरित्यागाच्च प्रस्तावनात्वाहानिरिति कवेर्मतम् । तदनुसारेणाहमायोध्यकः संवृत्तोऽस्मीति । अयोध्यासंबन्धित्वं च तस्यां कादाचित्कावस्थानरूपम् । तेन वैदेशिकोऽस्मीति उपरितनग्रन्थेन न विरोधः । **यदि तावदिति** । अत्रभवतः पूज्यस्य पौलस्त्यकुलस्य रावणवंशस्य धूमकेतोरभिवद्धस्मीकर्तुरुत्पातग्रहविशेषस्य वा । महाराजश्चासौ रामश्च इति विग्रहः तस्य । रात्रिंदिवमहर्निशम् । 'अचतुर—' सूत्रे निपातितोऽयं शब्दः । असंहृतनान्दीकोऽविच्छिन्नमङ्गलः । 'शेषाद्विभाषा' इति कप् । ह्रस्वप्रतिषेधः । अयं पट्टाभिषेकसमयः यदा पट्टाभिषेकमुहूर्तः यस्मिन्काले । यद्वा समय आचारः पट्टाभिषेकरूप आचारो यदा यस्मिन्काले । इदानीमस्मिन्काले । पट्टाभिषेकसमये चत्वरस्थानान्यङ्गणभागाः विश्रान्तमवसितं चाराणामधिकारिपुरुषाणां चरणं संचरणं येषु तानि । विश्रान्ताश्चाराणामधिकारिपुरुषाणां चरणा अङ्घ्रयो येष्विति वा । चारा निवृत्तव्यापाराः सन्तः चत्वरेषूपविश्य विश्राम्यन्तीति भावः । तत्किमिदानीं पट्टाभिषेककाले चत्वरस्थानानि विश्रान्तचारचरणानीति यत् तत् किमिति योजना । यस्मिन्दिवसे कलशतीर्थसेचनरूपपट्टाभिषेकक्रियाधिकरणमुहूर्तस्तद्दिवसात्पूर्वोक्त-

महात्मानः प्लवङ्गमराक्षसाः सभाजनोपस्थायिनश्च नानादिगन्तागता ब्रह्मर्षयो राजर्षयश्च यत्समाराधनायैतावतो दिवसानुत्सवे आसीत्।

सूत्रधारः—ओं अस्त्येतन्निमित्तम्।

नटः—अन्यच्च।

वसिष्ठाधिष्ठिता देव्यो गता राघवमातरः।
अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम्॥ ३॥

सूत्रधारः—वैदेशिकोऽस्मीति पृच्छामि। कः पुनरसौ जामाता।

नटः—

कन्यां दशरथो राजा शान्तां नाम व्यजीजनत्।
अपत्यकृतिकां राज्ञे रोमपादाय यां ददौ॥ ४॥

सभाजनोपस्थायिनः। 'सुप्यजातौ' इति णिनिः। इदं च मध्यमणिन्यायेन पूर्वोत्तराभ्यामन्वेति। ब्रह्मर्षयो गौतमविश्वामित्रादयो राजर्षयस्तु जनकप्रभृतयः। देवर्षीणामूर्ध्वदिग्गमनान्नानादिगन्तेत्युक्तिः। यत्समाराधनाय येषां प्लवङ्गमादीनां समाराधनाय पूजनायैतावतो दिवसानेतावत्सु दिवसेषु। अत्यन्तसंयोगे द्वितीया। प्रमोदः। चारगतागतहेतुभूतप्रहर्ष इत्यर्थः। यत्समाराधनाय प्रमोद आसीद् ते प्रेषिता इत्यन्वयः। 'तत्समाराधनाय' इति तत्पदयुक्तपाठे तु न विश्रान्तचारचरणत्वे हेतुरुक्तो भवतीत्यत्राह—तत्समाराधनायेति। एवं चारचरणहेतुर्गत इति भावः॥ आ अस्त्येतन्निमित्तम्। आ इति स्मरणवाचकम्। अतएव 'निपात एकाजनाङ्' इति प्रगृह्यत्वात्। आ अस्तीति संध्यभावः। 'वाक्यस्मरणयोरङित्' इत्याद्युक्तेः। एतन्निमित्तमस्ति। मया विस्मृतमिति भावः॥ **वसिष्ठाधिष्ठिता इति**। अरुन्धतीं पुरस्कृत्य वसिष्ठाधिष्ठिता इत्यन्वयः। गुरुपत्नीत्वयुक्तप्राधान्यादरुन्धतीं मुख्यां कृत्वा वसिष्ठेन व्यापारिता इत्यर्थः। वसिष्ठः कर्तव्यं अरुन्धतीमुखमवलोकमानोऽनुशास्ति। ततो देव्योऽरुन्धत्या सह कर्तव्यमनुतिष्ठन्तीति भावः। जामातुरित्येतन्मध्यमणिन्यायेन यज्ञाश्रमाभ्यामन्वेति। यज्ञे यज्ञनिमित्तम्।

विभाण्डकसुतस्तामृष्यशृङ्ग उपयेमे । तेन च सांप्रतं द्वादशवार्षिकं सत्रमारब्धम् । तदनुरोधात्कठोरगर्भामपि जानकीं विमुच्य गुरुजनस्तत्र गतः ।

सूत्रधारः—तत्किमनेन । एहि । राजद्वारमेव स्वजातिसमयेनोपतिष्ठावः ।

नटः—तेन हि निरूपयतु राज्ञः सुपरिशुद्धामुपस्थानस्तोत्रपद्धतिं भावः ।

---

तां शान्तां रोमपादाय रोमपादनाम्ने । अपत्यस्य कृतिर्व्यापारो यस्यास्तथाविधम् । 'शेषाद्विभाषा' इति कप् । कन्यां ददाविसुक्ते कलत्रार्थामिति प्रतीतेस्तद्वारणायापत्यकृतिकामिति ददौ दत्तवान् ॥ ४ ॥ तेन ऋष्यशृङ्गेण । द्वादश वर्षाणि भविष्यतीति द्वादशवार्षिकम् । 'तमधीष्टो भृतो भूतो भावी' इत्यधिकृत्य विहितो ठञ् । द्विगुः । 'वर्षाल्लुक् च' इति पाक्षिको लुगभावः । अनुशतिकादित्वादुभयत्र वृद्धिः । न तूत्तरपदवृद्धिमात्रम् । 'अभविष्यति' इति प्रतिषेधात् । न च द्वादशवर्षाणि भूतमित्यर्थोऽस्त्विति वाच्यम् । आरब्धमिति-त्युक्तेरसाङ्गत्यापत्तेः । तदनुरोधात्कठोरगर्भेति जानीता सीतेत्युक्ततया सीतायाः गर्भिणीदशायामेतत्सत्रमारब्धमिति स्पष्टमवगम्यते । एवं द्वितीयाङ्कविष्कम्भे 'समनन्तरं च गर्भैकादशे वर्षे क्षात्रेण कल्पेनोपनीय त्रयीमध्यापितौ' इत्युक्त्वा 'संप्रति परिसमाप्तं द्वादशवार्षिकं सत्रम्' इति वक्ष्यमाणतया अत्रत्यद्वादशवार्षिकशब्दस्य द्वादशवर्षाणि भूतमित्यर्थाभ्युपगमेन तद्विरोधापत्तेरिति ध्येयम् । तदनुरोधात्तदनुसरणाद्धेतोः कठोरगर्भां पूर्णगर्भाम् । कठोरशब्दः पूर्णवाची । तदुक्तमुणादिषु वैयाकरणैः-'अयं पूर्णतायामपि' इति । यात इति । 'अनाहूतोऽध्वरं गच्छेत्' इति विधेः किं पुनर्न्यायादिति भावः ॥ तत्किमिति । स्वजातिसमयेन स्वजातिमर्यादया । उपतिष्ठावस्तोषयावः । रामस्य 'आत्मानं मानुषं मन्ये रामं दशरथात्मजम्' इति देवतात्वाभावात् 'उपाद्देवपूजा-' इत्यादिना नात्मनेपदम् । तथा च स्वजात्यनुगुणरूपं यत्स्तोत्रं तत् कुर्व इति बोधः ॥ तेनेति । स्तोतव्य-

सूत्रधारः—मारिष

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥५॥ ॥

नटः—अतिदुर्जन इति वक्तव्यम्।

देव्यामपि हि वैदेह्यां सापवादो यतो जनः।
रक्षोगृहस्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः ॥ ६ ॥

---

यदुक्तं स्तुतिं निरूपयत्विति तदवगच्छामि सुपरिशुद्धामिति नाभ्युपगच्छामि दोषरहितत्वरूपपरिशुद्धत्वस्य प्रयोजनाभावात्। स्तुतिवचनं तु कर्तव्यमेव स्वजातिनियतव्यापारत्वादित्याह—सर्वथेति। सर्वेण प्रकारेण सर्वथा व्यवहर्तव्यं व्यवहारः कर्तव्यः। भावे तव्यप्रत्ययः। व्यवहारशब्दः स्तुतिकरणरूपव्यापारपरः। अवचनीयता वचनीयं दोषस्तद्रहितता सुपरिशुद्धतेत्यर्थः। कुतः किमर्थम्। यद्वा कुतः कस्मै। 'सार्वविभक्तिकस्तसिः' इति चतुर्थ्यर्थे तसिः। अयमाशयः—दोषवत्तया वा दोषरहिततया वा गुणवत्तया वा स्तुतिकरणरूपव्यापारः कर्तव्यः। तस्य स्वजातीयधर्मत्वात्त्वदुक्तसुपरिशुद्धतया तु किम्। तस्याः फलाभावादिति। ननु जनाभिनन्दनमेव तत्फलमस्तु कुतः फलाभाव इत्यत्राह—यथा स्त्रीणामित्यादिना। पूर्वपादस्थहिशब्दस्यात्र संबन्धः। हि यस्माज्जनः स्त्रीणां साधुत्वे दुर्जनस्तस्मादवचनीयता किमर्थेति पूर्वेण संबन्धः। जनः स्त्रीणां साधुत्वे यथा पातिव्रत्यविषय इव वाचां साधुत्वे माधुर्यौज्ज्वल्यादिविषये दुर्जनो दोषदर्शी। दोषदर्शित्वमेव हि दौर्जन्यमिति भावः। यथा स्त्रीणां साधुत्वे जनो दुर्जनस्तथा वाचां साधुत्वेऽपि जनो दुर्जनो हि यस्मात्तस्मादवचनीयता किमर्थेत्यर्थः ॥ ५ ॥ प्रकृतकथासंगतये 'यथा स्त्रीणा'मिति यथेति दृष्टान्त उक्तः। तदुपजीव्य प्रकृतमवलम्बते—नटः—अतिदुर्जन इति वक्तव्यमिति। तत्र हेतुमाह—देव्या इति। हि यत इत्यनयोर्यथाक्रमं पूर्वोत्तरार्धयोरन्वयः। हि यस्माद्देव्या दीप्तिमत्या अपि। स्वभावतो दोषप्रतिभटाया अपीत्यर्थः। वैदेह्या विदेहराजपुत्र्याः। संबन्धसामान्ये षष्ठी। जनः सापवादः। अपवादो दोषकथनं तेन सहित इत्यर्थः। तथा च वैदेहीसंबन्ध्यपवादसहित इत्यर्थः। नित्यसापेक्षत्वात्समासः। तदु·

ततः कष्टं स्यात् ।

नटः—सर्वथा ऋषयो देवताश्च श्रेयो विधास्यन्ति । ( परिक्रम्य ) भो भोः क्वेदानीं महाराजः । ( आकर्ण्य ) एवं जनाः कथयन्ति—

स्नेहात्सभाजयितुमेत्य दिनान्यमूनि
नीत्सवेन जनकोऽद्य गतो विदेहान् ।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्मासनाद्विशति वासगृहं नरेन्द्रः ॥ ७ ॥

( इति निष्क्रान्तौ । )

प्रस्तावना ।

---

दोषाभाव उक्तः । रक्षोगृहस्थितिरित्यनेन असाधारणहेत्वभाव उक्तः । अग्निशुद्धावित्यनेन बाधकप्रमाणमुक्तम् । तथा च एतत्सर्वमपि नावलोकितमिति भावः । विषयप्रभावमविगणय्य असतोऽपि दोषस्य कथनं सुतरां दुर्जनकार्यम्, तत्राप्यसाधारणहेतुमप्यदृष्ट्वा विषयप्रभावमप्यविगणय्यासतोऽपि दोषस्य कथनं ततोऽपि दुर्जनकार्यम्, तत्रापि बाधकप्रमाणमप्यविश्वस्यासाधारणकारणमप्यदृष्ट्वा विषयप्रभावमप्यविगणय्यासतोऽपि दोषस्य कथनं ततोऽप्यतिदुर्जनकार्यमिति । अत्र हि यस्मात्सापवादः । यतश्च रक्षोगृहस्थितिर्मूलम् । आग्निशुद्धावनिश्चयश्च जनस्य । तस्माज्जनोऽतिदुर्जन इति वक्तव्यमित्येवं पूर्वेणान्वयः ॥ ६ ॥ यदि पुनरिति । किंवदन्ती लोकवादः स्यन्देत प्रस्रवेत् । श्रवणविषयीभवेदिति यावत् । अनेन प्रथमाङ्कार्थः सूच्यते । 'सर्वथा ऋषयः' इत्याद्यनेन शेषाङ्कार्थः सूचितः । एष ऋषिकर्तृकश्रेयोविधानरूपबीजन्यासादुपक्षेपो नाम संध्यङ्गमुक्तम् । यथा—'बीजन्यास उपक्षेपः' इति ॥ आकर्ण्येति । इदमाकाशभाषितमुच्यते । तदुक्तम्— 'अप्रविष्टैः सुहालापो भवेदाकाशभाषितम्' इति । स्नेहादिति । सभाजयितुं पूजयितुम् । उत्सवेन हर्षजनकेव्यापारेण । विमनसो दुःखितहृदयायाः परिसान्त्वनाय तद्दुःखापनयनक्षमभवनतत्परोपाय । 'तदर्थाच्च' इति चतुर्थी । धर्मासनात् । क्षत्रियधर्मभवना-

विहातुमस्मान् ।

किं त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
संकटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ ८ ॥

**सीता**—जाणामि अज्जउत्त जाणामि । किंदु संदावआरिणो बन्धुजणविप्पओआ होन्ति । (क)

**रामः**—एवमेतत् । एते हि हृदयमर्मच्छिदः संसारभावा येभ्यो बीभत्समानाः संत्यज्य सर्वान्कामानरण्ये विश्राम्यन्ति मनीषिणः ।

(प्रविश्य)

**कञ्चुकी**—रामभद्र–(इत्यर्धोक्ते साशङ्कम्) महाराज–

**रामः**—(सस्मितम्) आर्य ननु रामभद्र इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य । तद्यथाभ्यस्तमभिधीयताम् ।

---

(क) जानामि आर्यपुत्र जानामि । किंतु संतापकारिणो बन्धुजनविप्रयोगा भवन्ति ।

---

॥ ७ ॥ एवं प्रस्तावना प्रस्तुता । अथाङ्कः प्रस्तूयते–**ततः प्रविशतीत्यादिना** । अङ्कलक्षणं तु–'प्रत्यक्षनेतृचरितो विन्दुव्याप्तिपुरस्कृतः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥' इति । विश्वसिहि संतोषं प्राप्नुहि । 'समाश्वसिहि' इति पाठान्तरम् । विहातुं त्यक्तुम् । **किं त्विति** । किं तु अनुष्ठानस्य नित्यनैमित्तिकादिकर्मकलापनिर्वर्तनस्य नित्यत्वं नियतता । अनुष्ठानाभाव विरहरूपनियम इत्यर्थः । स्वातन्त्र्यं स्वैरावस्थानमपकर्षति न सहते । **संकटा हीति** । हि यस्मात् आहिताग्नीनां गृहस्थता गृहस्थाश्रमः प्रत्यवायैर्विहिताना-चरणजन्यपातकैः संकटा निविडा दुःखरूपा वा । जाग्रत्प्रत्यवायेत्यर्थः ॥ ८ ॥ **एवमिति** । येभ्य इति संसारभावेभ्यः संसारेऽवश्यानुभाव्यभावेभ्य इत्यर्थः । संसारो हि शरीरसंबन्धानुबन्धिसुखदुःखसमुदायः । तथा च गुरुबन्धुवियोगा-दीनां तदेकदेशत्वं संगतम् । बीभत्समाना जुगुप्समानाः । एतद्दोषानुबन्धजनि-तचित्तवृत्तिनिर्वासयुक्ता इत्यर्थः । बीभत्साया जुगुप्सानस्थायकत्वादिन्य

---

१ आसन्नो० २ वियोक्तुम्; न ते हि गुरवश्चिरं शक्नुवन्त्यस्मान् नियोक्तुम्. ३ [illegible]
४ गुरुअणस्स. ५ भिदः ६ भावा: [illegible]

सीता:—अज्ज तदो किं विलम्बीअदि। (क)

रामः—त्वरितं प्रवेशय।

(कञ्चुकी निष्क्रान्तः।)

(प्रविश्य।)

अष्टावक्रः—स्वस्ति वाम्।

रामः—भगवन् अभिवादये। इत आस्यताम्।

सीता:—भअवं णमो दे। अवि कुसलं सजामातुअस्स गुरुअणस्स अज्जाए सन्ताए अ। (ख)

रामः—निर्विघ्नः सोमपीथी आवुत्तो मे भगवानृष्यशृङ्ग आर्या च शान्ता।

सीता:—अह्मे वा सुमरेदि। (ग)

अष्टावक्रः—(उपविश्य) अथ किम्। देवि कुलगुरुर्भगवान्वसिष्ठस्त्वामिदमाह—

---

(क) आर्य ततः किं विलम्ब्यते।

(ख) भगवन् नमस्ते। अपि कुशलं सजामातृकस्य गुरुजनस्यार्यायाः शान्तायाश्च।

(ग) अस्मान् वा स्मरति।

---

ख्यातम्। अतएव बीभत्समाना इत्यस्य 'जुगुप्साविराम—' इत्यादिना पञ्चमी। 'बन्ध बन्धने' इत्यस्मात्स्वार्थे सनि रूपमिदम्। बधश्चित्तविकारे' इति वार्तिकादस्य चित्तविकारे वृत्तिः। काम्यन्त इति कामाः। कर्मणि घञ्। गृहक्षेत्रपुत्रादयस्तानित्यर्थः॥ उपचारो व्यवहारः। यथाभ्यस्तमभ्यस्तमनतिक्रम्य। यथार्थत्वात्समासः। अभिधीयताम्॥ अष्टावक्रस्तदाख्यः। अष्टौ वक्राणि अस्येति विग्रहः। योगरूढशब्दः। 'अष्टनः संज्ञायाम्' इति दीर्घः। हास्यानुप्रवेशार्थमष्टावक्रप्रवेशः॥ **अवि कुसलं सजामातुअस्सेति**। सजामातुअस्स सजामातृकस्य। 'प्रायो लुक्कगजतदपयवाम्' इति सूत्रेण

तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां
येषां कुलेषु सविता च गुरुर्वयं च ॥ ९ ॥

तत्किमन्यदाशास्महे । केवलं वीरप्रसवा भूयाः ।

रामः—अनुगृहीताः स्मः ।

---

पतित्वादिति भावः ॥ विश्वंभरेति । नन्दिनि गुणपूर्णे । 'टुनदि समृद्धौ' इत्यस्मात् भावे घञि 'अत इनिठनौ' इति इनिप्रत्ययः । एकाक्षरात्कृतोऽजाताविति निषेधस्तु प्रायिकः । ग्रह्यादिणिनिर्वा । नान्तत्वात् ङीप् । नन्दिनि पुत्रि । संबोधनम् । इदं च 'अस्माकं तु जनकसुता दुहितैव' इति वक्ष्यमाणरीत्या दशरथमतानुसारेण । भगवती षाड्गुण्यपरिपूर्णा विश्वंभरा भूमिः । भूरित्याद्यनुक्त्वा विश्वंभरोक्तिः क्षान्तिप्रधानतासूचनाय । भवतीं पूज्यां त्वामसूत सूतवती । 'षूङ् प्राणिप्रसवे' लङ् । शपो लुक् । विश्वंभराशब्दस्तु 'संज्ञायां भृतृ-' इत्यादिना खच्प्रत्ययमुमागमाभ्यां निष्पन्नः । प्रजापतिना ब्रह्मणा समः । स्वाध्यायादिना ब्रह्मतुल्य इत्यर्थः । मान्धातागमपारसंसदि महद्भावे यशोराशिषु इत्युक्तरीत्या ब्रह्मवत् माहात्म्यशालीति वा । राजा राजते दीप्यते इति । 'कनिन् युवृषितक्षि-' इत्यादिना कनिन्प्रत्ययः । ब्रह्मज्ञानपरिपूर्णतया नैष्ठिकवन्निरतिशयदीप्तियुक्त इत्यर्थः । यद्वा ज्ञानभक्तिवैराग्यैरस्मदादीनपि रञ्जयतीति राजा । धातूनामनेकार्थत्वादिति । जनकः पूर्वोक्तप्रकारेण श्रुतिषु प्रसिद्धः । 'जनको ह वैदेहः' 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यादिषु प्रसिद्ध इत्यर्थः । ते पिता । येषां राज्ञां कुलेष्विति बहुत्वं पूजायाम् । उद्भूतावयवविवक्षया कुलं सुत्पादकप्रबन्धः । सर्वं जगत्सुवति कर्मानुष्ठाने प्रेरयतीति वा सविता सूर्यो गुरुः पिता । वयमहम् । 'अस्मदो द्वयोश्च' इति एकत्वे बहुवचनम् । 'सविशेषणस्य प्रतिषेधः' इति तु न विधेयविशेषणाविषये । 'ततोऽनु त्वं प्रेयान्वयमपि हताशाः प्रियतमाः' इत्यादिप्रयोगात् । यद्वा 'वसिष्ठाङ्गिरसौ ऋषी प्राचेतसस्तथा' इति वक्ष्यमाणरीत्या वाल्मीकेः जृम्भकास्त्रसंप्रदायेन विश्वामित्रस्य वामदेवादेश्च ग्रहणात् वयमिति बहुवचनम् । गुरुरित्यनुषक्तस्य वचनविपरिणामात् गुरवो हितोपदेष्टारः । गृणातीति गुरुः । 'कृग्रोरुच्' इत्युणादिकसूत्रेण निष्पन्नोऽयं शब्दः । 'गुरुलघ्वक्षरभक्ताः इत्यादि

त्संपादयितव्य इति ।

**रामः**--क्रियते यदेषा[6] कथयति ।

---

शब्दस्तन्निवर्तकः' इति निरुक्त्या अज्ञाननिवर्तक इत्यर्थः । गुरवः पितर इत्येव वार्थः । 'स हि विद्यातस्तं जनयति' इति स्मृतेः । 'पुत्रका इति होवाच' इत्यादि पुराणाच्च । तेषां पार्थिवानाम् । 'सर्वा पूर्वमियं येषामासीत्कृत्स्ना वसुंधरा' इत्युक्तमुख्यपृथिवीपतित्वधर्माणां वधूरसि स्नुषासि ॥ ९ ॥ **तदिति ।** तस्मात् अन्यत्किं वक्ष्यमाणादितरत्किमाशास्महे । 'आङ्शासु इच्छायाम्' इति धातोर्लट् । अयं भावः--तत्र गुणातिशयो नाशास्यस्तस्य 'विश्वंभरा भगवती' इत्युक्तमातृसंबन्धादेव तत्सिद्धेः । नापि ज्ञानभक्तिवैराग्यादिकम् । तस्य ब्रह्मवित्तमजनकसंबन्धादेव तल्लाभात् । न वा हितप्रोहितत्वमैश्वर्यं भर्तृसंबन्धप्रयुक्तानकर्षाभावश्च प्रार्थ्यः । तेषां सद्गुरुसंबन्धशालिमहाराजमहाकुलप्रसूतराजकुलस्नुषात्वादेव सिद्धत्वात् । अत एतेषां नाशास्यत्वं किंतु वीरप्रसवत्वस्येति । एष ऋषिश्रेयोविधानभूतवसिष्ठानुग्रहरूपबीजस्य बहूकरणात्परिकरः । तदुक्तम्--'बीजस्य बहूकरणं परिकरः' इति ॥ **अनुगृहीता इति** । एतन्मनुष्यानुग्रहरूपबीजाङ्गीकरणरूपं समाधानं नाम संध्यङ्गमुक्तम् । तदुक्तम्--'बीजाङ्गीकरणं समाधानम्' इति । **लौकिकानामिति** । लौकिकानामित्यतो व्यतिरेकनिर्देशाल्लौकिकान्यस्य वेदस्यैव झटित्युपस्थितेः ऋषीणामित्युक्तम् । ऋषीणां[2] पुनः । तपस्विनामित्यर्थः । वाचमर्थोऽनुवर्तते[3] वागधीनोऽर्थो भवति । तपस्विनामुक्तिर्हि तपःप्रभावेनानासन्नमप्यर्थमुत्पादयतीति भावः । यद्वा 'ऋष गतौ' इत्यस्य बुद्ध्यर्थत्वात्कालत्रयवर्तिवस्तुसाक्षात्कर्तृत्वं ऋषिपदप्रवृत्तिनिमित्तम् । तथा च भाविनमर्थं दृष्ट्वा ते वदन्ति । ततः स्वकाले प्राप्ते सोऽर्थस्तामनुसरतीति भावः । हि यस्मात् एवं तस्मादनुगृहीता वयमित्यन्वयः । एतत् ऋषिश्रेयोवितरणरूपबीजगुणवर्णनात् विलोभनं नाम संध्यङ्गमुक्तम् यदुक्तम्--'बीजगुणवर्णनं विलोभनम्' इति ॥ १० ॥ **इदं चेत्यादि ।** गर्भस्य दौहृदलक्षणम् । 'स कीचकैर्मारुतपूर्णरन्ध्रैः' इतिवत् विशेष्यमात्रपरम् । अन्यथा दौहृदशब्दस्यैव गर्भचिह्नवाचित्वात् । तच्च विशिष्टवस्तुविषयाभिलाषादिरूपम् । तस्योदय आविर्भावः । मानयितव्यः संभावयितव्यः । तथा संपादनेन सफलीकार्यं इति भावः ॥ **क्रियत इति** । एषा कथयति यदि क्रियत

---

१ सर्वेषां. २ आर्याणां. ३ अनुवर्तते. ४ स्वगर्भदौहृदोदयो. ५ मानयितव्यः (टी.) ६ यदेषा.

कठोरगर्भेति नानीतासि । वत्सोऽपि रामभद्रस्त्वद्विनोदार्थमेव स्थापितः । तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्याम इति ।

**रामः**—( सहर्षलज्जास्मितम् । ) तथास्तु । भगवता वसिष्ठेन न किंचिदादिष्टोऽस्मि ।

**अष्टावक्रः**—श्रूयताम् ।

**जामातृयज्ञेन वयं निरुद्धास्त्वं बाल एवासि नवं च राज्यम् ।**
**युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत्परमं धनं वः ॥११॥**

---

इत्यन्वयः ॥ **ननान्दुरिति** । ननान्दुः । शान्ताया इत्यर्थः । देव्या इत्यस्य पूर्वोत्तराभ्यां संबन्धः । तथा च देवीसंबन्धिननान्दृपतिना देव्याः संदिष्टम् । देवीं प्रति संदिष्टमित्यर्थः । पुत्रपूर्ण उत्सङ्गोऽङ्को यस्या इति बहुव्रीहिः । अत्रात्र पूर्णपदेन यमावित्यपि सूच्यते । अन्यथा पुत्रवदुत्सङ्गामिति वक्तुं शक्यत्वात् । द्रक्ष्याम इति । एतत् बीजानुगुणप्रयोजनविभावनारूपा युक्तिर्नाम संध्यङ्गमुक्तं भवति । तदुक्तम्—'बीजानुगुणप्रयोजनविभावना युक्तिः' इति ॥ **जामात्रिति** । ऋष्यशृङ्गेति वक्तव्ये जामात्रित्युक्तं पूज्यतास्फोरणाय । एवं च तदिङ्गितं ज्ञात्वैवास्माभिरत्रासितव्यम् । किं पुनस्तत्कृतबहुनिर्बन्धे रातील्यत आह—निरुद्धा इति । अनेन सर्वप्रकारेणापि नगरं प्रत्यागमने त्वरातिशयो वासिष्ठस्येति व्यज्यते । ननु कुत ईदृशस्त्वरातिशय इत्यत आह—त्वं बाल एवासीति । नतु राज्यतन्त्रविचारोपमर्दाभिज्ञ इत्यर्थः । किं न दशरथजामातरमृष्यशृङ्गं जामातेति निर्दिशन्वसिष्ठः स्वस्य दशरथस्थानीयतामभिप्रैति । तच्च रामबुद्ध्या स्वबुद्ध्या च । एवं चात्रत्यबालशब्दः पुत्रत्वाभिप्रायमूलकः । ततश्च ननु पृथगाचार्यकं प्रस्तुतं स्यात् । इति तदागमने त्वरातिशय इति । न केवलमहमाचार्यः किं तु त्वद्बुद्ध्या दशरथस्थानीयश्च । तथा च त्वदीयराज्यतन्त्रविषयकास्थानानर्थशङ्का मामसंनिकृष्टं बाधत इत्याह—त्वं बाल एवासि । न त्वन्यादृशरघुकुलराजवत् शिष्य इत्यर्थः । तथा च तव शिष्यमात्रत्वे पौरोहित्यादिकं वामदेवादयो निर्वक्ष्यन्तीति तदर्थं नास्माकं त्वरा । किंतु त्वत्पुत्रत्वात् त्वां युवराजीकृत्य महाराजस्थानीयेन मया राज्यतन्त्रो विचारयितव्यः । अन्यथा न मामतिशङ्का मुञ्चतीति भावः । नन्वस्त्वेनम् तथापि युद्धादिषु लब्धवर्णस्य यौवराज्यस्य पालने सहायापेक्षा नास्तीत्यत्राह—राज्यमिति ।

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि ।
आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा ॥ १२ ॥

सीताः—अदो जेव्व राहवकुलधुरंधरो अज्जउत्तो ।(क)

रामः—कः कोऽत्र भोः । विश्राम्यतामष्टावक्रः ।

(क) अत एव राघवकुलधुरंधर आर्यपुत्रः ।

स्वस्मादात्मन आत्मीयाद्वा । परमं सर्वोत्कृष्टं प्रसिद्धधनस्य क्षयित्वमिति तद्व्यावृत्तिः परमशब्देन विवक्षिता । धनं लब्धांशपरिपालनालब्धांशार्जनाभ्यां धनतुल्यमित्यर्थः ॥ ११ ॥ यथेति । मैत्रावरुणिः मित्रावरुणयोरपत्यमित्यर्थे बाह्वादित्वादिञ्प्रत्ययः । 'देवताद्वन्द्वे च' इत्यानङ् । इयं च कथा पौराणिकी वेदितव्या । समादिशत्याज्ञापयति । तथा करोमीति शेषः । स्नेहमिति । स्नेहो हि सुखरूपः सुखान्तरहेतुश्च । किंच 'शरीरं वसु विज्ञानं मित्रार्थे संपरित्यजेत्' इत्युक्तरीत्या सर्वापेक्षया प्रशस्तश्च । अपि च 'अहेतुः पक्षपातो यस्तस्य नास्ति' इत्युक्तरीत्या दुर्निवर्त्यश्च । तथा च तत्परित्यागोऽपि मम न दुःखायेति भावः । स्नेहस्य व्यवस्थितविषयत्व एव गुणत्वमन्यथा तु दोषत्वमस्तीति निष्कर्षः । दया तु सर्वविषयापि गुणत्वं न मुञ्चति । यथा 'सर्वभूतेषु सर्वत्र संतुष्टया येन केनचित् । सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥' इत्युक्त्या धर्मरूपतया च । किंच परदुःखाधीनसत्ततया तन्निवृत्तिं विना दुर्निवर्त्या । तामपि मुञ्चतो मम न व्यथेति भावः । एतेषां व्यतिरेकेऽप्यात्मनो न व्यतिरेक इत्यस्यापकर्षः । सीता तु 'प्राणेभ्योऽपि गरीयसी' इत्युक्तरीत्या जीवितं प्रत्यपि प्रधानभूता । किंच 'अद्यावसितं रामस्य जीवितप्रयोजनम्' इति वक्ष्यमाणरीत्या मद्व्यतिरेकप्रयोजनव्यतिरेकवती । पूर्वोक्तस्नेहदयासौख्यैः संतुष्टोऽहं तामवलम्ब्य । तथाभूतामपि मुञ्चतो मम न व्यथेति भावः । सीतामित्यनुक्त्वा जानकीमित्युक्तिर्लोकाराधनापेक्षया ब्रह्मवित्तमजनकानुरोधोऽप्यकिंचित्कर इति सूचयति । लोके हि अभिमतवस्तुपरित्यागात्पूर्वकाले तस्य संनिधानात् न दुःखभूयस्त्वम् । परित्यागात्परमपि तस्यातीतत्वान्न दुःखभूयस्त्वम् । तत्परित्यागकाले तु भवति दुःखभूयस्त्वं तावद्वर्तमानत्वात् । मम तु वर्तमानकालेऽपि न दुःखमिति वर्तमानार्थकमुञ्चत इति पदशो लभ्यते । व्यथेति सामान्यशब्देन मनोव्याधिरपि नेत्यर्थः ॥ १२ ॥ राघवधुरंधरः । रघुवंशश्रेष्ठ इत्यर्थः । राघवपदोपादान

दिष्टमार्यस्य चरितमस्यां वीथ्यामभिलिखितम्। तत्पश्यत्वार्यः।

रामः—जानासि वत्स दुर्मनायमानां देवीं विनोदयितुम्। तत्कियन्तमवधिं यावत्।

लक्ष्मणः—यावदार्याया हुताशने विशुद्धिः।

रामः—शान्तं पापम्। (ससान्त्ववचनम्।)

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः॥ १३॥

---

स्तालङ्। 'विश्राम्यताम्' इति पाठे तु परिजनैरिति शेषः। विश्रमवान्क्रियतामित्यर्थः। णिजन्तात्कर्मणि लोट्॥ अर्जुनेन तन्नाम्ना। वीथ्यां चित्रमयश्रेण्याम्। दुर्मनायमानां दुःखितमनस्काम्। जनकस्य स्वदेशान्प्रति गमनादिति भावः। 'कर्तुः क्यङ् सलोपश्च'। ङित्वादात्मनेपदम्। शानच्। विनोदयितुं दुःखविस्मरणपूर्वकं संतोषं ग्राहयितुम्। 'नुद प्रेरणे' उपसर्गबलेन उक्तार्थलाभः। तत्कियानवधिः। तदित्यव्ययम् तस्येत्यर्थः। अवधिरन्तः कियान्। किंप्रमाणक इत्यर्थः। अनेकसंख्याकेषु मद्वृत्तान्तेषु कीदृशसंख्यायुक्तोऽस्मद्वृत्तान्तः। अस्य चित्रस्यावधिरित्यर्थः॥ **यावदिति**। हुताशनेन शुद्धिरिति विग्रहः। यवच्छब्दोऽवधारणार्थकः। हुताशनशुद्धिर्यावत्। हुताशनशुद्धिरेवावधिरित्यर्थः। अवधिरिति पूर्वस्मादनुषङ्गः॥ **शान्तं पापमिति**। योऽयमलीकोपन्यासस्तस्य पीडाहेतुभूतपापशान्तिकरो भवत्विति तात्पर्यम्। लोकोक्तिरियमिष्टजनं प्रत्यानिष्टवचनक्षमजनाशीर्वचनरूपा। ससान्त्ववचनम्। अत्यर्थमधुरवाक्यसहितमित्यर्थः॥ **उत्पत्तीत्यादि**। उत्पत्त्या परिपूतायाः परिशुद्धायाः। कृत्रिमत्वनिरासार्थमिदम्। स्वभावतो दोषप्रतिभटाया इत्यर्थः। अस्याः सीतायाः। पावयन्तीति पावनानि। नन्द्यादित्वाल्ल्युप्रत्ययः। अन्यानि पावनानि पावनान्तराणि तैरित्यर्थः। किम्। न किमपीत्यर्थः। शुद्धिर्हि दोषनिर्हरणम्। अविद्यमानदोषायाः कथं शुद्धिरिति भावः। किंच अन्तरशब्देन दोषरहितमात्रस्य पावकवस्त्वपेक्षा नास्ति। पावकस्य तु तन्नैरपेक्ष्यं कैमुतिकम्। इयं च केवलं दोषरहिता न। किंतु पावका चेति सूच्यते। 'अपि मां पावयेत्साध्वी स्नात्वेतीच्छति

---

१ अर्जुनेन चित्रकारेण (टी.) २ वीथिकायाम्. ३ कियानवधिः (टी.)

दोषं देवयजनसंभवे प्रसीद । एष ते जीवितावधिः प्रवादः ।

कष्टं जनः कुलधनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशिवं न हि तत्क्षमं ते ।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥ १४ ॥

---

जाह्नवी' इति न्यायात्। उक्तमर्थमुत्तरार्धेन दर्शयति–तीर्थोदकमिति। गङ्गादिपावनजलम्। तीर्थशब्दो विशेषणमात्रपरः। यथाश्रुते तीर्थशब्दस्यैव परिशुद्धोदकवाचित्वात्। यद्वा तीर्थानां गुरूणामुदकं पादावनेजनाम्भः। 'आपः पादावनेजनीर्द्विषन्तं नाशयन्तु मे' इति श्रुतेः। वह्निश्च अन्यतः शुद्धिमन्यहेतुकशुद्धिं नार्हतः। यथा पावकत्वाविशेषात्तीर्थोदकवह्न्योरितरापेक्षा नास्ति तद्वदस्या अपि पावकत्वाविशेषेण तदपेक्षा नास्तीत्यतिस्फुटम्। किंच विनिगमनाविरहात्। वह्नेर्वा सीतासंबन्धतः शुद्धिः किं न स्यादित्याशयः। अग्निप्रवेशानुमतिर्मूढप्रत्ययनार्था वा। अग्निप्राशस्त्यार्था वा ॥ १३ ॥ **जीवितावधिरिति**। जीवितस्यावधिर्यस्येति बहुव्रीहिः। यदीयावधिः जीवितावधिः। स इत्यर्थः। प्रसीद। **क्लिष्ट इति**। यद्यस्मात्कारणात्क्लिष्टो जनो दुःखितो जनो जनैरनुरञ्जनीयः। क्लेशं विस्मार्य लालनीय इत्यर्थः। न तु पूर्वानुभूतदुःखस्मारणेन क्लेशयितव्य इत्यर्थः। तत्तस्मात्। अशुभममङ्गलम्। 'अशिवम्' इति पाठान्तरम्। ते त्वद्विषये। शेषे षष्ठी। नु आवयोः। 'अस्मदो द्वयोश्च' इति द्वित्वे बहुवचनम्। यदुक्तम्–'अस्मत्कर्तृकं यद्वचनम्' इत्यर्थः 'नपुंसके भावे क्तः'। 'यावदार्याया हुताशनशुद्धिः' इत्युक्तलक्ष्मणवचनमित्यर्थः। अत्र लक्ष्मणवचनस्य रामस्य स्वोक्तितैक्याभिसंधिना। 'रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः' इत्युक्तः। तत्। वचनमित्यनुषज्यते। नः त्वदेकजीवितयोस्तव निर्दोषतां च जानतोरित्यर्थः। न क्षमं नोचितम्। अयं भावः–बन्धुत्वमित्रत्वानादरेण जनस्वरूपसामान्यधर्म एवानुरञ्जनीयानुरञ्जकभावे पर्याप्तो हेतुः। तत्र 'प्रेयो मित्रं बन्धुता वा समग्रा सर्वे कामाः संपदो जीवितं वा। स्त्रीणां भर्ता धर्मदाराश्च पुंसाम्' इत्युक्तरीत्या सर्वप्रकारप्रियतमायास्तव विषये तथाविधानामस्माकं पूर्वानुभूतदुःखस्मारणमहापराधो नोचित एव तत्राप्यलीकनिर्बन्धतरस्मारणं तु सुतराम्। किंच निर्दोषतां च जानतोरावयोस्तत्कथनं तु दूरोत्सारितमिति। सुरभिणः कुसुमस्य सुगन्धप्रधानस्य पुष्पस्य मूर्ध्नि स्थितिर्नैसर्गिकी निसर्ग एव। विनयादित्वात्स्वार्थे ठक्प्रत्ययः। सिद्धा प्रसिद्धा। चेतनाचेतनसाधारण्येन प्रसिद्धा। चेत-

सीता—होदु अज्जउत्त होदु । एहि । पेक्खह्म दाव दे चरिदम् । ( क ) ( इत्युत्थाय परिक्रामति । )

लक्ष्मणः—इदं तदालेख्यम् ।

सीता—( निर्वर्ण्य ) के एदे उवरिणिरन्तरट्ठिदा उवत्थुवन्दि विअ अज्जउत्तम् । ( ख )

लक्ष्मणः—एतानि तानि सरहस्यानि जृम्भकास्त्राणि यानि भगवतः कृशाश्वात्कौशिकमृषिमुपसंक्रान्तानि तेन च ताटकावधे प्रसादीकृतान्यार्यस्य ।

रामः—वन्दस्व देवि दिव्यास्त्राणि ।

ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदः तपांसि ।
एतान्यपश्यन्गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥१५॥

---

( क ) भवत्वार्यपुत्र भवतु । एहि । प्रेक्षामहे तावत्ते चरितम् ।
( ख ) क एते उपरिनिरन्तरास्थिता उपस्तुवन्तीवार्यपुत्रम् ।

---

त्यर्थः । अयं भावः—त्रिविधानि तावत्कुसुमान्यवगन्तव्यानि । कान्तिप्रधानानि सौरभ्यप्रधानानि, उभयप्रधानानि चेति । तत्र कान्तिप्रधानानि शाल्मलीकुसुमादीनि सौरभ्यप्रधानानि दमनकादीनि उभयप्रधानानि मालतीप्रभृतीनि । तत्र सौरभ्यमात्रप्रधानस्यापि न चरणावताडनार्हत्वम् । तस्य घ्राणैकनिरन्तरानुभाव्यत्वात् । एवं नाद्यस्यापि । तस्य दर्शनैकानुभाव्यत्वात् । उभयप्रधानस्य तु सुतरां न चरणावताडनार्हत्वमिति । सुरभिणः कुसुमस्येति पदद्वयोपादानादित्थं व्याख्यातम् । अत्र 'न मुसलैः' इति केचित्पठन्ति । ॥ १४ ॥ प्रेक्षामहे पश्याम इत्यर्थः । आलेख्यं चित्रम् । उपरिनिरन्तरस्थिता अविरलं स्थिता, अनुपविष्टा इत्याशयः । तेषां दिव्यास्त्रत्वादुपरिस्थितिर्युक्त्युपलेखनम् । उपस्तुवन्ति स्तोत्रं कुर्वन्ति ॥ सरहस्यानि । प्रयोगप्रतिसंहारोपायिकमन्त्रादयो रहस्यानि । तत्सहितानीत्यर्थः । जृंभकास्त्राणि भृशाश्वात्तन्नाम्नो मुनेः कौशिकं विश्वामित्रमुपसंक्रान्तानि प्राप्तानि । उपसंक्रान्तानीतिकर्तृप्रत्ययेन स्वयमेव तानि कौशिकं प्राप्तानीति लभ्यते । तथा च—'भृशाश्वः पुरःसहस्रपरिवत्सरान्तेवासिने कौशिकाय' इति वक्ष्यमाणं परःसहस्रपरिवत्सरान्तेवासित्वं जृम्भकास्त्ररूपफलगुरुत्वमपेक्ष्यासत्कल्पमिति हृदयम् ।

सीता—णमो एदाणम् । (क)

रामः—सर्वथैतानि[१] त्वत्प्रसूतिमुपस्थास्यन्ति ।

सीता—अणुग्गहीदह्मि । (ख)

लक्ष्मणः—एष मिथिलावृत्तान्तः ।

सीता—अह्महे दलन्तणवणीलुप्पलसामलसिणिद्धमसिणसोहमाण-मंसलेण देहसोहग्गेण विह्मअत्थिमिदताददीसन्तसोम्मसुन्दरसिरी[२] अ-

(क) नम एतेभ्यः ।

(ख) अनुगृहीतास्मि ।

ब्रह्मादयश्चतुर्मुखप्रभृतयः । गुरवस्तपस उपदेष्टारः । तमोनिवर्तका इत्यर्थः । 'शरदस्तपांसि' इति वा पाठः । तपांस्यन्तःकरणनैर्मल्यापादनद्वारा भगवत्साक्षात्कारहेतुभूतकायशोषणव्रतानि । परःसहस्रम् । सहस्रात्परा इत्यर्थः । 'कर्तृकरणे कृता बहुलम्' इति बहुलग्रहणात्समासः । सुप्सुपेति वा । पारस्करादित्वात्सहस्रशब्दस्य सुडागमः । सहस्रसंख्याधिकसंख्याका इत्यर्थः । 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः' इत्यनुशासनादेकत्वम् । शरदः संवत्सरान् । अत्यन्तसंयोगे द्वितीया । तथा च सहस्रसंख्याधिकसंवत्सरेषु निरन्तरं तप्त्वेत्यर्थः । ब्रह्म परमात्मा प्रधानं च । तत्कार्यत्वाज्जगत् ब्रह्मशब्देनोच्यते । तदुक्तम्—'तादर्थ्यादुपचारोऽस्ति क्वचित्स्वस्वामिभावतः । अङ्गाङ्गिभावतात्कर्म्याद्वैपरीत्यादपीष्यते ॥' इति । तस्य हिताय तदपेक्षितेष्टानिष्टप्राप्तिपरिहारसाधनाय तपःफलभूतजृम्भकोपदेशेन राजभिर्विरोधिनिरसनेन जगतः पुरुषार्थसाधननिर्वर्तनसिद्धेरिति भावः । अथवा ब्रह्म वेदस्तस्य हिताय धारणाय । धारणार्थकधाञ्धातोर्नपुंसके भावे क्तः । 'दधातेर्हिः' इति हिभावश्च । अनुस्मरणायेति भावः । तपोमयानि तपःस्वरूपाणि । स्वार्थिको मयट् । स्वानि स्वकीयानि तेजांसि एतान्यदर्शकजृम्भकास्त्राण्यपश्यन् । कार्यकारणनिबन्धनमिदं समानाधिकरण्यम् । 'दृशिर् प्रेक्षणे' इति धातोः लुङ् । तथा च । बहुतरतपःकार्यभूतानामेतेषां केवलगुरुप्रसादसाध्यत्वम् । नतु शुश्रूषादिसाध्यत्वमिति भावः ॥ १५ ॥ त्वत्प्रसूतिं त्वत्प्रसवम् । त्वत्पुत्रावित्यर्थः । 'द्विधागर्भग्रन्थिस्तदनुदिवसैः' इति वक्ष्यमाणरीत्या यमलत्वकर्तृप्रजात्वमपि निर्णीतमिति सूच्यते । अन्यथा स्त्रीप्रजात्वे

लक्ष्मणः—आर्ये पश्य पश्य ।

संबन्धिनो वसिष्ठादीनेष तातस्तवार्चति ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १६ ॥

रामः—सुश्लिष्टमेतत् ।

जनकानां रघूणां च संबन्धः कस्य न प्रियः ।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥ १७ ॥

---

(क) अहो दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलेन देहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्रीरनादरखण्डितशंकरशरासनः शिखण्डमुग्धमुखमण्डल आर्यपुत्र आलिखितः ।

---

कम् । मांसलं स्फीतं तेन । तथाविधेनेत्यर्थः । विशेषणसमासः । देहसौभाग्येन देहसौन्दर्येण । विस्मितः आश्चर्येयुक्तः । अतएव स्तिमितो निश्चलो यस्तातस्तेनदृश्यमाना सौम्या आल्हादकरी सुन्दरश्रीर्यस्य स तथोक्तः । प्राकृते आत्मनेपदाभावाद्दीसन्तेत्युक्तिः । त्रुटितं भग्नं शरासनं येन स तथोक्तः ॥ **संबन्धिन इति ।** जनकानां जनकापत्यभूतानाम् । लाक्षणिकोऽयं शब्दः । पुरोहितो गौतमो गौतमपुत्रः । 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण्प्रत्ययः । शतानन्दस्तन्नामा । तथा च—एष तव तातो वसिष्ठादीन्संबन्धिनोऽर्चति पूजयति । जनकानां पुरोहितो गौतमः शतानन्दश्चार्चतीत्यनुषङ्गः । यथाक्रमं तव तातो जनकः संबन्धिनो दशरथप्रभृतीनर्चयति । जनकानां पुरोहितो गौतमः शतानन्दश्च वसिष्ठादीनर्चयति चेत्यन्वयः ॥ १६ ॥ **सुश्लिष्टमिति ।** ईमारनिन्दपरिगलन्यायादिति भावः । **जनकानामिति ।** जनकानां जनकवंशोद्भवानां रघूणां रघुवंशोद्भवानां च । लाक्षणिकोऽयं शब्दः । संबन्धो आपत्यसंबन्धः । कस्य न प्रियः । सर्वस्यापि प्रिय इत्यर्थः । यत्र संबन्धे कुशिकनन्दनो विश्वामित्रः स्वयं दाता स्वयं प्रतिग्रहीता च । दशरथं प्रति दाता जनकं प्रति प्रतिग्रहीता चेत्यर्थः । अयं भावः—तव मम च परिणयरूपोऽयं संबन्धो जनकदशरथयोराघयोर्जनानां च मध्ये कस्यचिदपि नाप्रियः । तथा हि—जनकानां रघूणामित्यनेन रघुवंश्याज्जनकवंश्यान्प्रति नाप्रियत्वमिति लभ्यते । अत्र निमीनामित्यनुक्त्वा जनकानामिति शब्दोपादानेन 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति जनकं प्रासङ्ग

सीता:—एदे क्खु तक्कालकिदगोदाणमङ्गला चत्तारो भादरो विआहदिक्खिदा तुह्मे। अह्मो जाणामि तस्सिं जेव्व पदेशे तस्सिं जेव्व काले वत्तामि। (क)

राम:—

समयः स वर्तत इवैष यत्र मां
समनन्दयत्सुमुखि गौतमार्पितः।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः॥ १८॥

---

(क) एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरो विवाहदीक्षिता यूयम्। अहो जानामि तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्ते।

---

'श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः' इत्यादि कालिदास-निरुक्त्या 'लङ्घिबंह्योर्नलोपश्च' इत्यनुशासनेन च लङ्घयन् लङ्घने जानाति सर्वमिति व्युत्पत्त्या 'मनुरिक्ष्वाकवेऽब्रवीत्' इत्यैक्ष्वाकवं रघुकुलासाधारणज्ञानयोगशीलत्वं सूच्यते। तथा चान्यादृशजनकविषये जातोऽपत्यसंबन्धः संबन्धिनामित्यभिमतो भवति। तत्र क्षीरशर्करावदन्योन्यसंपर्करमणीयज्ञानकर्मशीलजनकविषयत्वे तु तस्य हेमारविन्दपरिमलन्यायेनातिश्लाघ्यत्वमिति तान्प्रत्यप्रियत्वव्यावृत्तिः। अत-एव चावां प्रत्यपि नाप्रियत्वं। यत्र दातेत्यादिनापि जनकदशरथौ प्रत्यप्रियत्वं व्यावर्त्यते। तत्र दशरथं प्रत्ययाचितोपनतत्वाज्जनकं प्रति दुष्करधनुर्भङ्गप्रतिज्ञा-निवर्तनरूपमहोपकारकरणाच्च गुर्वनुज्ञाप्राप्तत्वान्महर्षिकारितत्वाच्च नावां प्रत्यप्रि-यत्वम्। स्वयमित्यनेनाग्रहादिमूलकत्रिशङ्कुयाजनहरिश्चन्द्रोपप्लवव्यावृत्तिः। अतएव जनान्प्रत्यप्रियत्वं निरस्तम्। शिष्टानुमतस्य धर्मत्वे शिष्टकारिते तस्य कैमुत्ति-कसिद्धत्वात्। तथा चापस्तम्बस्मृतिः—'यत्त्वार्याः क्रियमाणं तं प्रशंसन्ति स धर्मः' इति। ब्रह्मर्षिर्विश्वामित्र इत्याद्यनुक्त्वा कुशिकनन्दन इति पदोपादानं विश्वामित्रः स्वब्रह्मर्षित्वमविगणय्य भूतपूर्वगत्या क्षत्रियत्वं स्वीकृत्य बन्धुभा-वेनास्मत्संबन्धिभावेनास्ति असतिसंबन्धे ब्रह्मर्षिकृत्यानीति व्यञ्जयति॥ १७॥

**एदे क्खु इति**। गोदानमङ्गलं क्षौरकर्म तस्य मङ्गलार्थत्वान्मङ्गलत्वम्। विवाहेन दीक्षिता विवाहदीक्षिता इति। विवाहहेतुकव्रतवन्त इत्यर्थः। 'दीक्षमौण्ड्येज्यो-पनयनव्रतादेशेषु' इति दीक्षिधातोः कर्तरि क्तः। तस्मिन्नेव प्रदेश इति प्रत्यभिज्ञा-दार्ढ्यमिति॥ **समय इति**। यत्र समये गौतमार्पितः पुरोधसा शतानन्देन

श्रुतकीर्तिः ।

सीता--वच्छ इअं वि अवरा का । (क)

लक्ष्मणः--( सलज्जस्मितम् । अपवार्य । ) अये ऊर्मिलां पृच्छत्यार्या । भवतु ; अन्यतः संचारयामि । ( प्रकाशम् ) आर्ये दृश्यतां द्रष्टव्यमेतत् । अयं च भगवान्भार्गवः ।

सीता--( ससंभ्रमम् ) कम्पिदह्मि । (ख)

रामः--ऋषे नमस्ते ।

लक्ष्मणः--आर्ये पश्य पश्य । अयमसावार्येण-( इत्यर्धोक्ते )

रामः--( साक्षेपम् । ) अयि वत्स बहुतरं द्रष्टव्यम् । अन्यतो दर्शय ।

सीता--( सस्नेहबहुमानं निर्वर्ण्य । ) सुट्ठु सोहसि अज्जउत्त एदिणा विणअमाहप्पेण ।

---

( क ) वत्स इयमप्यपरा का ।
( ख ) कम्पितास्मि ।
( ख ) सुष्ठु शोभसे आर्यपुत्र एतेन विनयमाहात्म्येन ।

---

स्वमिदम् । अत्र सुमुखि 'आगृहीतकमनीयकङ्कणः' इत्युक्त्या सिद्धसाध्यसमभिव्याहारन्यायेनागृहीतकमनीयकङ्कणत्वं प्रति सीताया वदनकमलसौन्दर्यातिशयो हेतुरित्यवगम्यते । अन्यथा 'पाणिं गृह्णीष्व पाणिना' इत्युक्तपाणिपीडनस्य प्रकोष्ठवर्तिमणिवलयग्रहणासंगतेः । तथा च--सीतामुखचन्द्रदर्शनानन्दपारवश्येन सम्यक्करग्रहणाभावात्संवृत्तस्तथात्व एव स पाणिर्मूर्तिमान्महोत्सव इव स्थितः । सम्यक्स्पर्शे तु निःसीमानन्दकर इति व्यज्यते । आगृहीताः सम्यग्गृहीताः शृङ्गारमूलकसात्त्विकभावविशेषरूपत्वेन स्पृहणीयाः कङ्कणाः स्वेदजलबिन्दवो यस्मिन्स तथोक्त इत्यप्याहुः । आगृहीतवैवाहिकप्रतिसर इत्यपि केचित् ॥ १८ ॥ इयमार्या माण्डवीति भरतभार्यात्वात्, इयमपि वधूरिति शत्रुघ्नभार्यात्वात् स्नुषात्वेन ग्रहणम् ॥ **अयमिति** । भार्गवः परशुरामः ॥ कम्पितास्मि । येनेति शेषः ॥ **अयमार्येणेत्यादि** । अत्र वैष्णवं धनुरारोपयित्वा समाकृष्टतेजस्क इति वक्तुमुद्युक्तवान् लक्ष्मणः । तावदात्मप्रशंसामसहमानो रामः प्रतिषिद्धवानित्याशयः ॥ साक्षेपं सप्रतिषेधम् । 'क्षिपु निरसने' इत्यस्मात् भावे घञ्प्रत्ययः । अन्यतो दर्शय । अन्यत्र लिखितं दर्शयेति भावः ॥ विनयमाहात्म्येन विनयस्य स्वोत्कर्षतानाविष्करणरूपस्य स्वमिमानि-

**लक्ष्मणः**—एते वयमयोध्यां प्राप्ताः ।

**रामः**—( सास्रम् ) स्मरामि हन्त स्मरामि ।

जीवत्सु तातपादेषु नवे दारपरिग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥ १९ ॥

इयमपि तदा जानकी

प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलै-
र्दशनमुकुलैर्मुग्धालोकं शिशुर्दधती मुखम् ।

---

कर्षानुसंधानरूपस्य वा माहात्म्यं भूयस्ता तेनेत्यर्थः । एते वयमयोध्यां प्राप्ताः । तथालिखिता इत्यर्थः ॥ **जीवत्स्विति** । तातपादेषु । पितरीत्यर्थः । पूजायां पादशब्दो बहुवचने । 'उत्तमानां स्वरूपं तु पादशब्देन भण्यते' इति । जीवत्सु सप्राणेषु । 'यस्य च भावेन' इति सप्तमी । दारसंग्रहे नूतने सति मातृभिश्चिन्त्यमानानां नस्ते दिवसा गता इत्यन्वयः । गता दिवसास्ते हीति स्मरणाकारप्रदर्शनं वा । अबन्धोरपि रक्षकस्य जीवनमानन्दाय । सर्वविधसंरक्षणशीलस्य पितुर्जीवनं तु निरवधिकाह्लादजनकम् । किंच दाराणां सततपरिचयेऽपि प्रियैकवेषत्वं नूतनसंग्रहे तु अमन्दानन्दहेतुत्वम् । स्वरूपसत्यैव माता निरतिशयसौख्यकारिणी । तत्रापि सा लोकप्रसिद्धसर्वविधसंरक्षणानि कृत्वा ततोऽप्यधिकानि चिन्तयति चेत् निःसीमानन्दलाभः । एवमपरिच्छिन्नानन्दकन्दलहेतुत्वाद्दिवसानां तच्छब्देन निर्देशः । तातपादजीवनादीनां मध्य एकैकमेवानन्दहेतुः । समुदितानि तु सुतरामिति भावः ॥ १९ ॥ 'नूतने दारसंग्रहे' इत्युक्तं विशिनष्टि-**इयमपि तदेत्यादिना** । **प्रतन्विति** । शिशुः शैशवान्तवती । शिशुप्रायेत्यर्थः । 'पतिसंयोगसुलभं वयो दृष्ट्वा च मे पिता' इत्युक्तेः । पतनेन प्रस्थितदशनपतनेन । प्रान्तोन्मीलदित्युक्तेः । विरलैः सान्तरालैः । प्रान्ते-ष्वायत्र उन्मीलच्छब्दः प्ररोहद्दन्तपरः । दशनकुसुमैरिति रूपकसाहचर्यात् । तथा च उन्मीलदेव उद्यन्नूतनदशनाङ्कुर एव मनोहरकुड्मलमुन्मीलन्मनोहरकुड्मलं । प्रान्ते उन्मीलन्मनोहरकुड्मलं येषा[मि]ति, [illegible]

वनस्पतिः कालिन्दीतटे वटः श्यामो नाम ।

रामः—( सस्पृहमवलोकयति । )

सीता—सुमरेदि वा एदं पदेसं अज्जउत्तो । (क)

रामः—अयि कथं विस्मर्यते ।

अलसललितमुग्धान्यध्वसंजातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ २४ ॥

लक्ष्मणः—एष विन्ध्याटवीमुखे विराधसंरोधः ।

---

( क ) स्मरति वैतं प्रदेशमार्यपुत्रः ।

---

विग्रहः । एतेन बीजानुगुणप्रोत्साहनरूपं भेदो नाम संध्यङ्गमुक्तम् । तदुक्तम्—'बीजानुगुणप्रोत्साहनं भेदः' इति ॥ वनस्पतिरपुष्पत्वे सति फलवान् । वट श्यामो नाम तथा प्रसिद्धिमान् ॥ अलसेत्यादि । अध्वनि मार्गे संपातः सम्य गमनम् । मम लक्ष्मणापेक्षया त्वरितगमनमिति भावः । 'अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान्' इत्युक्तत्वात् । तेन यः खेद आयासस्तस्माद्धेतोरलस ललितमुग्धान्यलसानि प्रसरणाकुञ्चनासमर्थानि ललितानि मृदूनि मुग्धानि सुन्दराणि । स्वभावतः सौदर्यसौकुमार्ययोः सत्वेऽप्यध्वसंपातखेदादलसललि संमुग्धानीत्युक्त्या मार्गगमनायासेन तयोर्द्विगुणीभाव इति भाव. । 'तथापि दृशोः प्रिया' इत्युक्तेः । अशिथिलपरिरम्भैर्दृढतरालिङ्गनैः । बहुवचनमालिङ्गना वृत्त्यभिप्रायकं कामतन्त्रप्रसिद्धालिङ्गनभेदबाहुल्याभिप्रायकं वा । दत्ता संवाहनानि येभ्य इति चतुर्थीबहुव्रीहिः । संवाहनं नामाङ्गानां गमनादिजनित यासशमनौपयिकदृढतमस्पर्शविशेषः। परितः साकल्येन मृदिता निष्पीडित या मृणाली तद्वद्दुर्बलानि स्वस्वधारणसामर्थ्यरहितान्यङ्गकानि । 'अनुकम्पायाम इति कन्प्रत्ययः । त्वं ममोरसि कृत्वा यत्र यस्मिन्प्रदेशे निद्रामवाप्ता स क विस्मर्यत इति योजना । अयं भावः—पूर्वमध्वसंपातखेदः, ततो ललितत्वसं क्रमार्थद्विगुणीभावः, ततस्तद्दर्शनवशादशिथिलालिङ्गनबाहुल्यम् ततश्च तत्संव हनता ततः स्वधारणसामर्थ्यविरहदौर्बल्यम् ततो रामवक्षःस्थल एव लम

द्दतालवुन्तादवत्तनिवारिदादपं अत्तणो दक्खिणारण्णप्पवेसारम्भम्।(क)

रामः—

एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रिततरूणि तपोवनानि।
येष्वातिथेयपरमाः शमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥ २५ ॥

लक्ष्मणः—अयमविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः सततमभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यगो गिरिः प्रस्रवणो नाम।

रामः—

स्मरसि सुतनु तस्मिन्पर्वते लक्ष्मणेन
प्रतिविहितसपर्यासुस्थयोस्तान्यहानि।

---

(क) अलं तावदेतेन। प्रेक्ष तावदार्यपुत्रस्वहस्तधृततालवृन्तातपत्रनिवारितातपमात्मनो दक्षिणारण्यप्रवेशारम्भम्।

---

त्रमेव तालवृन्तं तदेवातपत्रं यस्मिन्निति विग्रहः। आत्मनोऽस्याहितं जीवितनिरपेक्षक्रियारूपम्। दाक्षिणारण्ये पथिकत्वमिति विग्रहः॥ **एतानीति**। येषु तपोवनेषु। अतिथिषु विषये साधुरातिथेयोऽतिथिसत्कारः परमः येषां ते पुरुषा इत्यर्थः। शमिन इति द्वितीयान्तम्। पक्वान्नाधिकारिणो यतीन् भजन्ते सेवन्ते। किं च नीवारमुष्टेः पचनं यैस्ते गृहिणो गृहाणि भजन्ते। यद्वा शमिन इति गृहिविशेषणपदं प्रथमान्तम्। यमवन्त इदं धर्मादीनामप्युपलक्षणम्। आतिथेयपरमा गृहिणो गृहस्था गृहाणि भजन्त इत्यन्वयः। यद्वा आतिथेयपरमा आतिथ्यापेक्षिणो नीवारमुष्टेः पचनं येभ्य इति तथोक्ता शमिनः पक्वान्नाधिकारिणः कर्तारो गृहिणो गृहस्थस्य गृहाणि भजन्ते। तानि वैखानसैर्मुनिभिराश्रितास्तरवो येषु तथोक्तानि, एतानीत्यन्वयः॥२५॥ **अयमविरलेत्यादि**। अरण्यपरिणद्धा गोदावरी मुखेषु येषां तानि कन्दराणि यस्य स तथोक्तः। पर्वतानां स्वतोऽपि नीलत्वान्मेदुरितेत्युक्तम्॥ **स्मरसीति**। हे सुतनु शोभन तनुर्यस्य इति विग्रहः। तनुरित्यङन्ताद्वा

स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि ॥ २६ ॥

किं च ।

किमपि किमपि मन्दं मन्दमासक्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥ २७ ॥

---

संबुद्धौ ह्रस्वः । तस्मिन्पर्वते । प्रस्रवण इत्यर्थः। विहिताश्च ताः सपर्याश्च विहितसपर्याः विहितसपर्यासु विहितसपर्यासु प्रतिविहितसपर्यम् । वीप्सायामव्ययीभावः । तत्र आ समन्तात्सुखेन स्थितयोरित्यर्थः। 'सुः पूजायाम्' इति कर्मप्रवचनीयत्वात् षत्वाभावः । यद्वा प्रतिविहिताभिः । प्रत्युपकारीकृताभिरित्यर्थः । अस्मत्कृतवनानुगमनानुज्ञामहोपकारस्येति शेषः । आवयोरित्याकृष्यते । सरसनीरां स्वाभाविकमधुररसयुक्तजलवतीम् । अनेन समुद्रसंगमसमीपस्थजलं व्यावर्त्यते । तत्रास्याः क्षारप्रसिद्धेर्वा किमित्यर्थः । अत एव पूर्वोत्तरयोः किमिति लभ्यते । अत्र प्राथमिकत्वाद्बाह्यत्वाच्च प्रथमं तान्यहानीति दिनस्योक्तिः । आनन्तर्याद्रहस्यत्वाच्च आवयोर्वर्तनानीत्यस्यानन्तरोक्तिः । तदुभयोपकारित्वाद्गोदावर्या मध्योक्तिरिति ध्येयम् ॥ २६ ॥ **किमपीति** । आसक्तिः रत्यभिनिवेशो विषयानुभूत्यानवस्थानलक्षणस्तस्या योगात् संबन्धाद्धेतोः अविरलितौ निरन्तरीकृतौ कपोलौ यस्मिन्कर्मणि तथोक्तम् । मन्दं मन्दमतिसूक्ष्माक्षरं यथा तथा । अक्रमेणान्योन्यस्वभावाविरुद्धप्रक्रियया किमपि किमपि । इदं च गुप्तकथनम् । जल्पतोः।अशिथिले गाढे परिरम्भे व्यापृतमेकैकं दोः ययोरिति पूर्वस्मादनुषङ्गः । शेषे षष्ठीयम् । अविदितं यथा तथा गता यामा यस्यास्तथाविधा रात्रिरेव व्यरंसीत् विरमति स्म । नैवासक्तियोगविस्रम्भसंलापक्रीडादय इत्यर्थः । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ।'यम रम–' इति सगिटौ । अत्र अविदितगतेति वाविदितगतनाडीति वा अकृत्वा यामपदोपादानादयमाशयोऽवगम्यते । × × × तथाहि किमपि किमपीत्यस्य सुरतकालीनवक्तव्यजातमेवार्थः । गुप्तकथनादेवं च किमपि किमपि जल्पतोरित्यत्र मन्दंमन्दमविरलितकपोलमित्युभयत्र जल्पनेऽन्वेति । अक्रमेणेत्यपि तथा । एवं च सुरतकालीनजल्पनस्य मान्द्यातिशयोक्तिकथनादार्द्रवाक्त्वं सीताया गम्यत इत्युक्ताद्रतिविशेषात्फुल्लजृम्भिताख्यबन्धविशेषौ सूच्येते । तदुक्तं काञ्चीनादेन— 'फुल्लजृम्भितयोः स्त्रिया आर्द्रता न क्रोधः' इति । तल्लक्षणं तु अविरलित-

**लक्ष्मणः**—एषा पञ्चवट्यां शूर्पणखा ।

**सीता**—हा अज्जउत्त एत्तिअं दे दंसणम् । (क)

**रामः**—अयि विप्रयोगत्रस्ते चित्रमेतत् ।

**सीता**—जहा तहा होदु । दुज्जणो असुहं उप्पादेइ । (ख)

**रामः**—हन्त वर्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति ।

**लक्ष्मणः**—

**अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना**
**तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि ।**
**जनस्थाने शून्ये विकलकरणैरार्यचरितै-**
**रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ २८ ॥**

(क) हा आर्यपुत्र एतावत्ते दर्शनम् ।

(ख) यथा तथा भवतु । दुर्जनोऽसुखमुत्पादयति ।

---

सितत्वाद्बहूनां क्रीडाविशेषाणां तद्धेतुभूतासक्तियोगस्य चाविरतत्वाद्रात्रिरेव व्यरंसीदित्युक्तम् । इदमेवाभिसंधाय 'बिन्दुमात्रं विशिष्यते' इति कालिदासेनोक्तम् । वस्तुतस्तु संलापादिबाह्यसंभोग एव स्वारस्यमिति सुधियो विभावयन्तु ॥ २७ ॥ **एष इति** । शूर्पणखाविवादः । रामेण लक्ष्मणं प्रति तेन रामं प्रति प्रेषणादिरितिभावः । 'नखमुखात्संज्ञायाम्' इति ङीषो निषेधः । 'पूर्वपदात्' इति णत्वम् ॥ **वियोगत्रस्तेति** । वियोगात्त्रस्त इति विग्रहः । 'पञ्चमी' इति योगविभागात्समासः ॥ असुखं दुःखम् ॥ **अथेति** । अथ विकलकरणैरार्यचरितैः । यथा ग्रावापि रोदिति वज्रस्यापि हृदयं दलति तथा पापै रक्षोभिर्जनस्थाने शून्ये सति कनकहरिणच्छद्मविधिना वृत्तमिदं क्षालितमपि व्यथयतीत्यन्वयः । अथ शूर्पणखाचित्रदर्शनानन्तरं । यथा येन प्रकारेण विकलानि स्वस्वव्यापारशून्यानि करणानि चक्षुरादीनि येषु तथोक्तैरार्यचरितैर्मूर्छाप्रभृतिव्यापारैर्ग्रावापि शिलापि रोदिति रोदनं करोति । 'रुदादिभ्यः' इतीट् । वज्रस्यापि वज्रादन्येनाभेद्यस्य हृदयं मध्यप्रदेशो दलति द्विधा भिन्नं भवति तथा तेन प्रकारेण वृत्तमिति संबन्धः। जनस्थाने पापै रक्षोभिः शून्ये सति। खरदूषणादिवधानन्तरमित्यर्थः । कनकहरिणच्छद्मविधिना स्वर्णमारीचमायिकमृगव्याजकरणेन वृत्तं निष्पन्नमिदमिति सीताहरणादेश्चित्रस्याङ्गुल्या निर्देशः । क्षालित-

सीता—( सास्रमात्मगतम् । ) अयि देव रहुकुलाणन्द एव्वं मम कालणादो किलिट्ठोसि । ( क )

लक्ष्मणः—( रामं निर्वर्ण्य साकूतम् ) आर्य किमेतत् ।

अयं ते बाष्पौघस्त्रुटित इव मुक्तामणिसरो
विसर्पन्धाराभिर्लुठति धरणीं जर्जरकणः ।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति च भराध्मातहृदयः ॥ २९ ॥

रामः—वत्स

तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढः ।
दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्मव्रण इव वेदनां करोति ॥ ३० ॥

सीता—हद्धी हद्धी । अहंवि अदिभूमिं गदेण रणरणएण अज्जउत्तसुण्णं विअ अत्ताणं पेक्खामि । ( ख )

---

( क ) अयि रघुकुलानन्द एवं मम कारणात्क्लिष्टोऽसि ।

( ख ) हा धिक् हा धिक् । अहमप्यतिभूमिं गतेन रणरणकेनार्यपुत्रशून्यमिवात्मानं पश्यामि ।

---

रीतीत्यवगम्यते ॥ २८ ॥ **आर्येति** । एतद्वक्ष्यमाणम् ॥ **अयं तावदिति** । त्रुटितः छिन्न आवेगो दुःखातिशयः । अधरश्च नासापुटश्चेति विग्रहः । तयोर्द्वन्द्वश्च । अतो न नासाशब्दे ह्रस्वः । उन्नेयोऽनुमेय आध्मातहृदयो गद्गदशब्दरुद्धकण्ठः । 'ध्मा शब्दे' इति धातोः कर्मणि क्तः । नेदं चित्रकथनं किंतु तादात्विकवास्तवावस्थाकथनमेव । तत्कथयेत्यादिप्रतिवचनानुरूप्यात् ॥ २९ ॥ **तत्कालेति** । प्रतिकृतिषु प्रतिक्रियासु वाञ्छयादरेण विपच्यमानः । स्वयमेव परिपाकमाश्रित्येत्यर्थः । कर्मणः कर्तृत्वविवक्षया 'कर्मवत्कर्मणा' इत्यातिदेशिकयगात्मनेपदम् । इदं च मध्यमणिन्यायेन पूर्वोत्तराभ्यामन्वेति । तनोति विस्तारयतीत्यर्थः ॥ ३० ॥ भूमिमतिक्रान्तोऽतिभूमिः । 'अत्यादयः' इति [illegible] निर्देशः । अतिभूमित्वं गतेनेत्यर्थः । वैपुल्यं प्राप्तेनेति

**लक्ष्मणः**—( स्वगतम् । ) भवत्वन्यतः क्षिपामि । ( चित्रं विलोक्य प्रकाशम् । ) अथैतन्मन्वन्तरपुराणगृध्रराजस्य तत्रभवतस्तातजटायुषश्चरित्रविक्रमोदाहरणम् ।

**सीता**—हा ताद णिव्वूढो दे अवच्चसिणेहो । ( क )

**रामः**—हा तात काश्यप शकुन्तराज क्व नु खलु पुनस्त्वप्रदृशस्य महतस्तीर्थस्य साधोः संभवः ।

**लक्ष्मणः**—अयमसौ जनस्थानपश्चिमतश्चित्रकुञ्जवान्नाम दनुकबन्धाधिष्ठितो दण्डकारण्यभागः । तदिदमृष्यमूकपर्वते मतङ्गस्याश्रमपदम् । इयं च श्रमणा नाम सिद्धा शबरतापसी । तदेतत्पम्पाभिधानं पद्मसरः ।

**सीता**—एत्थ किल अज्जउत्तेण विच्छिण्णामरिसधीरत्तणं पमुक्ककण्ठं रुण्णं आसि । (ख)

**रामः**—देवि रमणीयमेतत्सरः ।

> एतस्मिन्मदकलमल्लिकाक्षपक्ष-
> व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
> बाष्पाम्भःपरिपतनोद्गमान्तराले
> संदृष्टाः कुवलयिनो भुवो विभागाः ॥ ३१ ॥

---

( क ) हा तात निर्व्यूढस्तेऽपत्यस्नेहः ।

( ख ) यत्र किलार्यपुत्रेण विच्छिन्नामर्षधीरत्वं प्रमुक्तकण्ठं रुदितमासीत् ।

---

विस्मारयामि । **अथैतदिति** । अन्यो मनुर्मन्वन्तरम् । मयूरव्यंसकादित्वात्समासः । मन्वन्तरात्पुराणस्येति विग्रहः । सुप्सुपेति समासः । तातजटायुषः पितृसखत्वात्तातपदव्यपदेशः । चरित्रं स्ववृत्तम् । विक्रमः शौर्यम् । उदाहरणम् । सदृशचित्रलेखनमिति भावः ॥ **हा तातेति** । काश्यपः कश्यपपुत्रः । तीर्थभूतस्य हितोपदेष्टुः ॥ **एतस्मिन्निति** । मदेन कलं कूजितं येषां ते तथोक्ताः । तथाविधानां मल्लिकाक्षाणां हंसविशेषाणां पक्षैरुद्भिर्व्याधूताः

लक्ष्मणः—अयमार्यो हनूमान् ।

सीता—एसो सो चिरणिव्विण्णजीवलोअपच्चुद्धरणगुरुओवआरी महाणुभावो मारुदी । (क)

(क) एष स चिरनिर्विण्णजीवलोकप्रत्युद्धरणगुरूपकारी महानुभावो मारुतिः ।

संदृष्टाः । निरन्तरं दृष्टा इत्यर्थः तथा कुवलयिन इत्यत्र प्रशंसायां मतुपा प्रशस्तकुवलययुक्ता इत्यर्थलाभेन रात्रौ दृष्टा इति सूच्यते । केचित्तु-मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डपुण्डरीका विभागा बाष्पाम्भःपरिपतनोद्गमान्तराले कुवलयिनो दृष्टा इत्यन्वयमुक्त्वा बाष्पाम्भःप्रसरणमलिनीकृतपुण्डरीकाः कुवलयवन्तो दृष्टा इत्यर्थमाहुः । परे तु—मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डपुण्डरीकाः कुवलयिनश्च विभागाः । विभज्यन्त इति विभागाः । परस्परं संकीर्णप्रदेशा बाष्पाम्भःपरिपतनोद्गमान्तराले संदृष्टा एकीकृत्य दृष्टाः । समित्येकीकारे । अविभागेन दृष्टा इत्याहुः । इतरे तु—'ननु रमणीयमेतत्प्रसरः' इत्युक्तं त्वया तत्कथमुपपद्यते विरहोद्दीपककलकूजितयुक्तहंसाधिष्ठितपुण्डरीकयुक्तस्य सरसो द्रष्टुमशक्यत्वादित्यत्राह—एतस्मिन्मदकलेति । मत् अकलेति पदच्छेदः । मदिति पञ्चम्येकवचनम् । पृथक्पदं समस्तं वा । मन्मन्निमित्तं विरहव्यथातुरमद्धेतोर्न दियते कलं कूजितं येषां ते तथा मल्लिकाक्षाणां हंसविशेषाणां पक्षैर्व्याधूतानि । कम्पितानीति यावत् । अत एव स्फुरदुरुदण्डानि निवृत्ताधारतया चलदुरुदण्डानि पुण्डरीकानि येषु तथोक्ताः कुवलयिनः पुण्डरीकवद्विवा विकासाद्यभावेनाकिंचित्करत्वाद्धंसैरव्याधूततया कुवलयसत्तामात्रवन्तः । एतस्मिन्विभागा बाष्पाम्भःपरिपतनोद्गमान्तराले संदृष्टाः सम्यग्दृष्टाः । परिहाससंभावितत्वादवस्थितिव्यतिरेकानिश्चयपर्यन्तं दृष्टा इत्यर्थः । निवृत्तोपप्लवतया सम्यग्दृष्टा इति भावः । मल्लिकाक्षाः खलु विरहोद्विग्नस्य मम कृते स्वयं विरहसमुद्दीपकं कूजितं त्यक्त्वा तदुद्दीपकानि पुण्डरीकान्यप्यनाशयन् । ततोऽहं निवृत्तोपप्लवतया नान्तरीयकतयावस्थितिपर्यन्तं तान्विहंगान्दृष्टवानिति भावः । युक्तं चैतत् । विरहाखिन्नं रामं प्रति मल्लिकाक्षाणाम् 'अपि ग्रावा रोदिति' इति न्यायेन करुणायाः संभवात् । हंसचक्रवाकशापदर्शनेन चक्रवाकशापदाता रामोऽस्माकमपि शापं दास्यतीति भीत्या शब्दासंभवात् । 'कण्ठेषु स्खलितं गलेऽपि शिशिरे पुंस्कोकिलानां रुतम्' इत्यादिविषयविशेषैस्तिरश्चामपि विरहित्वानुरोधः प्रसिद्धश्चेति वदन्ति ॥ ३१ । एष इति । चिर निर्विण्ण

रामः—

दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्धनः ।
यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥ ३२ ॥

सीता—वच्छ एसो[3] कुसुमिदकदम्बतरुताण्डविअबोहिणो किंणामहेओ गिरी जत्थ अणुभावसोहग्गमेत्तपरिसेसधूसरसिरी मुहुत्तं मुच्छन्दो तुए परुदिएण अवलम्बिदो तरुअले अज्जउत्तो आलिहिदो। (क)

लक्ष्मणः—

सोऽयं शैलः ककुभसुरभिर्माल्यवान्नाम यस्मि-
न्नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।

रामः—

वत्सैतस्माद्विरम विरमातःपरं न क्षमोऽस्मि
प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः ॥ ३३ ॥

लक्ष्मणः—अतः परमार्यस्य तत्रभवतां कपिराक्षसानां चासंख्यातान्युत्तरोत्तराणि कर्माश्चर्याणि । परिश्रान्ता चेयमार्या । तद्विज्ञापयामि विश्राम्यतामिति ।

---

(क) वत्स एष कुसुमितकदम्बतरुताण्डवितबर्हिणः किंनामधेयो गिरिर्यत्रानुभावसौभाग्यमात्रपरिशेषधूसरश्रीर्मूर्छंस्त्वया प्ररुदितेनावलम्बितस्तरुतल आर्यपुत्र आलिखितः ।

---

च जीवलोकप्रत्युद्धरणमित्युक्तम् ॥ **दिष्ट्येति** । दिष्ट्येत्यानन्दे । **यस्य वीर्येणेत्यादि** । वयम् । लक्ष्मणभरतशत्रुघ्नसीताविभीषणसुग्रीववानराः अहं चेत्यर्थः । कृतिनः सुकृतिनः । यद्वा कृतमुपकारस्तद्वन्तः । उपकृता इत्यर्थः । अन्योन्यवृत्तान्तकथनेन सीतारामयोः, स्वानवधानप्रयुक्तसीताविरहपरिहारेण लक्ष्मणस्य, वह्निप्रवेशपरिहारेण भरतशत्रुघ्नयोः, शरणागतस्वपरिग्रहसिद्धान्तेन विभीषणस्य, सुखोत्पादनेन सुग्रीवस्य, मधुवनभङ्गापराधवारणेन वानरणाम्, स्वसंजीवनादिना भुवनानां च कृतित्वमिति यथायथमूहनीयम् ॥ ३२ ॥ अनुभावः प्रभावः । सौभाग्यं सौन्दर्यम् । प्ररुदितेन रोदनकर्त्रा । 'आदिकर्मणि क्तः' । रोदनप्रारम्भ एव । अवलम्बितः पतन् । यथा धारित इति ॥

अत्थि मए विण्णावणिज्जं[1] । (क)

**रामः**—नन्वाज्ञापय ।

**सीता**—जाणे पुणोवि पसण्णगम्भीरासु वणराइसु विहरिस्सं[2] पवित्त[3]सोम्मसिसिरावगाहां भअवदिं भाईरहिं ओगाहिस्सं ति । (ख)

**रामः**—वत्स लक्ष्मण ।

**लक्ष्मणः**—एषोऽस्मि ।

**रामः**—वत्स अचिरं संपादनीयोस्या दोहद इति संप्रत्येव गुरुभिः संदिष्टम् । तदस्खलितसुखसंपातं रथमुपस्थापय ।

**सीता**—अज्जउत्त तुम्हेहिं वि तहिं गन्दव्वम् । (ग)

**रामः**—अयि कठिनहृदये एतदपि वक्तव्यमेव ।

**सीता**—तेण हि पिअं मे । (घ)

**लक्ष्मणः**—यथाज्ञापयत्यार्यः । ( इति निष्क्रान्तः । )

**रामः**—प्रिये अत्र वातायनोपकण्ठे मुहूर्तं संविष्टौ भवावः ।

**सीता**—एव्वं होदु । ओहरिस्सामि क्खु परिस्समजणिदाए णिद्दाए । (ङ)

(क) आर्यपुत्र एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया अस्ति मम विज्ञापनीयम् ।

(ख) जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्यामि पवित्रसौम्यशिशिरावगाहां भगवतीं भागीरथीमवगाहिष्य इति ।

(ग) आर्यपुत्र युष्माभिरपि तत्र गन्तव्यम् ।

(घ) तेन हि प्रियं मे ।

(ङ) एवं भवतु । अपाह्रिये खलु परिश्रमजनितया निद्रया ।

अपरिसंख्यानि॰ परिसंख्यानिषेधः । अवधिरिति यावत् । तद्रहितानि संख्याशून्यानीति वा ॥ प्रत्युत्पन्नदोहदायाः । उत्पन्नाभिलाषाया इत्यर्थः । उत्पन्नमनोविकाराया इति वा ॥ **वत्स अचिरेत्यादि** । एष गूढप्रकाशनादुद्भेदः ॥

१ विण्णप्पम् ( विज्ञाप्यम् ). २ विहरिअ ( विहृत्य ). ३ पवित्तणिम्मलसिसिरसलिलं

( तथा कारयन्सानन्दम् ) प्रिये किमेतत् ।

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च संमीलयति च ॥ ३५ ॥

जीवयन्निति । साध्वसं भयम् । अधिकण्ठम् । कण्ठ इत्यर्थः । इन्दोरिम ऐन्दवाः । चन्द्रमणिश्चन्द्रकान्तशिला । जीवयन्नर्पयतामिवेत्यन्वयः । इवशब्दो ईषदर्थकः । जीवयन्निति च । 'लक्षणहेत्वोः' इति शतृ । तथा च मत्संजीवनफलकं यदीपदर्पणं तत्कर्म कियतामित्यर्थः । अथवा एतद्विरहे 'न जीवेयं क्षणमपि' इत्युक्तम् । अत्र ऐन्दवेत्यादिना सादृश्यमुक्त्वा जीवयन्निवेति विशेषस्योक्तेः व्यतिरेकालंकारः । 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः' इति ॥ ३४ ॥ तथा कारयन्निति । 'सहजलज्जाजडदृशः' इति वक्ष्यमाणरीत्या लज्जयाविष्टायां तस्यां स्वयं तथा कारयन्नित्यर्थः । पूर्वोक्तश्रमवशाच्च स्वयमेव तथा कारयतीत्युक्तम् ॥ विनिश्चेतुमिति । अत्रत्यसुखदुःखशब्दौ प्रियाप्रियाभिश्रशत्रुसंश्लेषादिजन्यमानससुखदुःखपरौ शारीरसुखदुःखभेदविषविसर्पयोः पृथग्ग्रहणात् । सुखदुःखयोः शारीरमानसत्वविभागस्तु 'कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्' इति सूत्रतद्व्याख्यानयोः स्पष्टः । अत्र सीते इति संबुध्यन्तमध्याहार्यम् । तवेत्युक्तेः । हे सीते तव स्पर्शे स्पर्शे तादीयावत्स्पर्शेषु परिमूढः स्वस्वविषयग्रहणासमर्थ इन्द्रियगणश्चक्षुरादीन्द्रियसमूहः येन स तथोक्तो मम विकार आन्तरावस्थाविशेषः । चैतन्यमन्तःकरणावच्छिन्नचैतन्यम् । जीवचैतन्यमिति यावत् । अद्वैतमतप्रक्रिययेदमुक्तम् । मदन्तःकरणमिति फलितोऽर्थः । भ्रमयति प्रातिकूल्यतया भासमानः सन् क्षुब्धं करोति । संमीलयति च अनुकूलतया भासमानः सन् उल्लासयति च । अयमित्यध्याहार्यम् । अयं विकारः सुखमिति विनिश्चेतुं न शक्यः दुःखमिति वा विनिश्चेतुं न शक्यः । प्रमोहो वा प्रकृष्टमूर्च्छात्वेन संशयितुं योग्यो निद्रा वा सुषुप्तित्वेन संशयितुं योग्यः । विषविसर्पः किमु । विषेण विसृप्यत इति विग्रहः । कर्मणि घञ् । विषप्रसरणजन्यत्वेन संशयितुं योग्य इत्यर्थः । मदः किमु । मदत्वेन संशयितुं योग्य इत्यर्थः । अस्य विकारस्य स्पर्शजन्यत्वात्परिमूढेन्द्रियगणत्वादन्तरारम-

१ मामनुगमनाय. २ प्रबोधः. ३ संमोहयति; भ्रमयति समुन्मीलयति च; स्थगयति

सीता—थिरप्पसादा तुह्मे इदो दाणिं किमवरम् । (क)

रामः—

म्लानस्य जीवकुसुमस्य विकासनानि
संतर्पणानि सकलेन्द्रियमोहनानि ।
एतानि ते सुवचनानि सरोरुहाक्षि
कर्णामृतानि मनसश्च रसायनानि ॥ ३६ ॥

(क) स्थिरप्रसादा यूयमित इदानीं किमपरम् ।

क्षोभकरत्वाच्च तथाविधशास्त्रवादिस्पर्शजन्यमानसदुःखत्वेन संशययोग्यत्वम् । एवं स्पर्शजन्यत्वात्परिमूढेन्द्रियगणत्वादन्तरात्मोल्लासकारित्वाच्च तथाविधमित्रादिस्पर्शजन्यमानससुखत्वेन संशयार्हत्वम् । भवति च मित्रादिस्पर्शजन्यसुखं परिमूढेन्द्रियगणम् । 'नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि' इत्युक्तेः । एवं स्पर्शजन्यत्वात्परिमूढेन्द्रियगणत्वादन्तरात्मक्षोभकरत्वाच्चास्य दण्डाद्यभिघातजन्यपरिमूढेन्द्रियगणत्वान्तरात्मक्षोभकरत्वविशिष्टसूक्ष्मप्राणसंचाररूपमूर्छात्वेन संभावनार्हत्वम् । एवमस्य विकारस्य स्पर्शजन्यत्वात्परिमूढेन्द्रियगणत्वादन्तरात्मानुकूलत्वाच्च मृदुतरतल्पादिस्पर्शजन्यत्वनिवृत्तेन्द्रियव्यापारत्वपरमात्मसुपरिष्वङ्गप्रयुक्तसुखरूपत्वविशिष्टनिद्रात्वेन संशयार्हत्वम् । एवमस्य स्पर्शजन्यत्वात्परिमूढेन्द्रियगणत्वादन्तरात्मप्रतिकूलत्वाच्च तथाविधविषस्पर्शजन्यविकारत्वेन संशयार्हत्वम् । एवमस्य स्पर्शजन्यत्वात्परिमूढेन्द्रियगणत्वादन्तरात्मानुकूलत्वात्तथाविधमदत्वेन संशययोग्यत्वम् । मदस्य क्षीरसुराद्याप्यायकवस्त्वायत्तत्वात्स्पर्शजन्यत्वं परिमूढेन्द्रियगणत्वमन्तरात्मानुकूलत्वं च । तदुक्तम्—'मदिरादिकृतो मोहहर्षव्यतिकरो मदः' इति । सर्वमिदं सीताया भोग्यताप्रकर्षे तात्पर्यमाविष्करोति । हिशब्दः प्रसिद्धौ । तथा च मदीयोऽयं विकारस्त्वयापि ज्ञायत इति व्यज्यते ॥ २५ ॥ म्लानस्येति । म्लानस्य हर्षक्षयवतो जीवकुसुमस्य जीव एव कुसुमं तस्य विकासनानि विकासजनकानि हर्षोत्पादकानि संतर्पणानि तृप्तिजनकानि भोग्यान्तरापेक्षानुत्पादकानि अत एव सकलानामिन्द्रियाणां मोहनानि स्वव्यापारनिरोधीनि कर्णयोरमृतानि । यथाऽमृतस्य 'दृष्ट्वा तृप्यन्ति' इति दर्शनमात्रेण तृप्तिजनकत्वम् । तद्वदेषामर्थपर्यालोचनं विनापि रमणीयत्वमिति भावः। मनसश्च रसायनानि रसायनं नाम अनेकरसवस्तुसमुदायात्मकरसवस्तुविशेषो वैद्यके प्रसिद्धः बहुवचनेनाने रसायनसदृशानीति व्यज्यते । किंचाने-

सीता—पिअंवद एहि । संविसाव । (

निरूपयति ) ( क )

रामः—अयि किमन्वेष्टव्यम् ।

आविवाहसमयाद्गृहे वने शैशवे तदनु यौवने पुनः ।
स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते ॥३७॥

सीता—( निद्रां नाटयन्ती । ) अत्थि एदम् । अज्जउत्त अत्थि एदम् । ( इति स्वपिति । ) ( ख )

रामः—कथं प्रियवचना मे वक्षसि प्रसुप्तैव । ( निर्वर्ण्य । )

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।

---

( क ) प्रियंवद एहि । संविशावः ।

( ख ) अस्त्येतदार्यपुत्र अस्त्येतत् ।

---

श्रवणजन्यसुखानामेतद्वचनैर्लाभ इति व्यज्यते । अपि च यथा रसायनस्य रसमयत्वाद्भोग्यत्वम्, औषधात्मकत्वाद्रोगनिवर्तकत्वं च, एवमेतेषामपि प्रियत्वं हितत्वं चेति व्यञ्जयितुं रसायनत्वोक्तिः । सरोरुहाक्षि आयामत्वविपुलत्वाभ्यां सादृश्यमभिप्रेतम् । एवं च स्वस्या अपि स्ववचनवैलक्षण्यप्रयुक्तविस्मयातिशयाच्चक्षुषोरायतत्वविपुलत्वद्विगुणीभाव इति भावः । 'ते सुवचनानि स्वकीयवचनवैलक्षण्यातिशयतः सीतायाः स्ववचनेषु स्वीयतासंशयः स्यादिति ते इत्युक्तिः । सुशब्देन सीतावचनेष्वपि एतादृशं सौभाग्यं नानुभूतपूर्वमिति व्यज्यते । 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति न्यायेन न दोषः ॥ ३६ ॥ प्रियंवद प्रियवादिन् । 'प्रियवशे वदः खच्' । संविशावः । 'स्वपः संवेश इत्यपि' इत्यमरः ॥ अपि संदेष्टव्यम् । संदेश उक्तिः । भ्रुकुटीभटोऽयं सूचयितव्यः । किमर्थमुक्तिप्रयास इति भावः । यद्वा यथा शयनदशायामुपधानादीनामुपकरणत्वं तद्वन्ममापीति विधिर्वा किमर्थ इति भावः ॥ उपकरणत्वमेवाह—आविवाहेति । आविवाहसमयाद्विवाहसमयादारभ्येत्यर्थः । गृहे शैशवे यौवने च स्वापहेतुः । वने पुनर्यौवने स्वापहेतुरित्यन्वयः । न तु यथासंख्यम् । अन्ययानुपाश्रितः स्वापहेतुस्तयानुपाश्रित इत्यर्थः । अतः 'जुष्टं परमनारीणां भुजैः परमसुन्दरैः' इत्यनेन न विरोधः । चेटीविषयासंवाहने तात्पर्यात् । 'न रामः परदारान्वै चक्षुर्भ्यामपि पश्यति' इत्युक्तेः । मद्वा तदुपधानमित्यनुक्त्वा रामबाहुरित्युक्तिः प्रसिद्धिद्योतनार्था । 'उपधाय भुजं

किमस्या न प्रेयो यदि पुनरसह्यो न विरहः ॥३८॥

( प्रविश्य )

प्रतीहारी—देव उवट्ठिदो । ( क )

रामः—अयि कः ।

प्रतीहारी—आसण्णपरिआरओ देवस्स दुम्मुहो । ( ख )

रामः—( स्वगतम् । ) शुद्धान्तचारी दुर्मुखः । स मया पौरजानपदानपसर्पितुं प्रहितः । ( प्रकाशम् ) आगच्छतु ।

( प्रतीहारी निष्क्रान्ता । )

( प्रविश्य )

दुर्मुखः—( स्वगतम् ) हा कहं सीतादेईए ईदिसं अचिन्तणिज्जं जणाववादं देव्वस्स कहइस्सं । अहवा णिओओ क्खु मे ईदिसो मन्दभाअस्स । ( ग )

( क ) देव उपस्थितः ।

( ख ) आसन्नपरिचारको देवस्य दुर्मुखः ।

( ग ) हा कथं सीतादेव्या ईदृशमचिन्तनीयं जनापवादं देवस्य कथयिष्यामि । अथवा नियोगः खल्वीदृशो मे मन्दभाग्यस्य ।

अमृतवर्तिर्नयनयोः । तथा नयनानन्दकरीत्यर्थः । किमेतत्पर्यन्तानुधावनेन नानेन । एतदीयमेव यत्किंचिन्मम पर्याप्तमित्याह—असावस्या इति । वपुषि शिशिरचन्दनव्यावृत्तिः । अस्याः किं न प्रेयः । एतत्संबन्धि किं न प्रियम् । सर्वमपि प्रियमेवेत्यर्थः । अत्र सीतापेक्षया तत्संबन्ध्येव प्रियमिति रामचन्द्रमतमिति कवेराशयोऽवगम्यते । उपसंहारे किमस्या न प्रेय इत्युक्तवान् । इतरथा कथमेवमेव न वदेत् । भर्तृमेण्ठश्च—'मनसिजरुजः सा वा दिव्या ममालमपोहितुं रहसि लघयेदारब्धा वा तदाश्रयिणी कथा' इत्याह । अत्र रामबाहुरुपधानमिति सीतां प्रति स्वबाहोरुपधानत्वमुक्त्वा 'अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः' इत्युक्तं रामेण । तदिदं वैलक्षण्यातिशयकार्यम् । अत्र 'इयं गेहे लक्ष्मीः' इत्यादिभिरेकस्या एव सीतायाः गृहविषये दीपकलिकाकार्यकारित्वं चक्षुर्विषये ज्योत्स्नादिकार्यकरत्वं कण्ठे हारकार्यकारित्वं च व्यज्यते । 'रूपकमुल्लेखो' वा अलंकारः ॥ ३८ ॥ आसन्नपरिचारको दुर्मुख-

**सीता**—( उत्स्वप्नायते। ) हा अज्जउत्त सोम्म कहिं सि।

**रामः**—अये सैवेयं[1] रणरणकदायिनी चित्रदर्शनाद्विरहभावना देव्याः स्वप्नोद्वेगं[3] करोति। ( सस्नेहमङ्गमस्याः परामृशन्। )

अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु य-
द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।
कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥३९॥

( क ) हा आर्यपुत्र सौम्य कुत्रासि।

स्तन्नाम। ॥ अपसर्पो गूढचरः। प्रहितः प्रयुक्तः। न तु वास्तव्य इत्यर्थः। रणरणकदायिनी विक्षोभकारिणी। विरहभावना वियोगध्यानम्। चित्रदर्शनादिति स्मरणहेतुरुक्तः। स्वप्ने निद्रायामुद्योगं वचनादिप्रयत्नम्। 'उद्वेगम्' इति पाठे भयसंभ्रममित्यर्थः। अङ्गमस्याः परामृशन्। एतेनोपरितनश्लोकस्यापत्य-विषयत्वकल्पना परास्ता तथा सति उदरमस्याः परामृशन्निति वक्तव्यतापत्तेः। न च 'मयैवादौ ज्ञातः करतलपरामर्शकलया द्विधा गर्भग्रन्थिः' इति वक्ष्यमाणानुवादस्य पुरोवादसापेक्षतया अत्राङ्गशब्दस्य तद्विशालोदरपरत्वं कवेः संमतमिति वाच्यम्। तत्र 'सहजलज्जाजडदृशः' इति जागरप्रतीतेः। अत्र च सुषुप्तिप्रतीतेस्तदयोगादिति ध्येयम्। **अद्वैतमिति**। यत्सर्वास्ववस्थासु सुख-दुःखयोरद्वैतमनुगतम्। जाग्रत्स्वप्नसुषुप्त्यादिसर्वावस्थासु ये सुखदुःखे तयोः संबन्धि यदद्वैतमभिन्नत्वं तदनुगतम्। तद्विशिष्टमित्यर्थः। सर्वास्ववस्थास्वभि-न्नसुखदुःखापादकमित्यर्थः। द्वयोर्भावो द्वैतम्। इदमेवाद्वैतं चक्रवाकमिथुनवर्ण-नव्यपदेशेन नवेन कविना व्याख्यातम्—'भुक्तं तद्विसृणालयोर्मिथुनयोः पीतं द्विराजीवयोः सुप्तं तद्विफलाशयोरविरलं संश्लिष्टयोर्यद्यपि। पर्यायात्समयद्वयेन विरुतं भिन्नप्रयत्नेन वा मूर्तिद्वैतवशान्मतिर्मिथुनमित्यद्वैतमेवानयोः ॥' इति। पर्यायादिति पर्यायशब्दमन्तर्भाव्य न विरुद्धमिति ल्यब्लोपे पञ्चमी व्याख्येया। नातः समयद्वय इत्यनेन पौनरुक्त्यम्। यत्र दाम्पत्ये हृदयस्य गुरुकुलशिष्टमनस इत्यर्थः। विश्रामः श्रमापनयनकसुखविशेषानुभवः। अत्र 'विश्राम इत्यपाणि-नीयम्। नोदात्तेति वृद्धिप्रतिषेधात्' इति वैयाकरणाः। श्रीहर्षस्तु 'विश्रामो विश्रमश्च' इति द्विरूपकोश उक्तवान्। यस्मिन्दाम्पत्ये रसः स्पृहारूपो जरसा

**रामः**—ब्रूहि यदुपलब्धम् ।

**दुर्मुखः**—उवट्ठवन्ति देवं पौरजाणपदा विसुमरिदा अह्मे महा- राअदसरहस्स रामभद्देणेत्ति । (ख)

**रामः**—अर्थवाद एषः । दोषं तु मे कंचित्कथय येन स प्रतिवि- धीयते ।

**दुर्मुखः**—(सविम् ।) सुणादु देओ । (कर्णे ।) एव्वं त्रिअ । इति । (ग)

**रामः**—अहह तीव्रसंवेगो वाग्वज्रः । (इति मूर्च्छति ।)

---

(क) जयतु देवः ।

(ख) उपस्तुवन्ति देवं पौरजानपदा विस्मारिता वयं महाराजदशरथस्य रामभद्रेणेति ।

(ग) शृणोतु महाराजः । एवमिव ।

---

वरणमारभ्य शरीरपातपर्यन्तं वर्तमानेन कालेन परिणते उपचयं प्राप्ते प्रेमसारे उत्कृष्टप्रेम्णि स्थितं स्थितिमत् । 'मालत्याः प्रथमावलोकदिवसादारभ्य विस्तारिभिर्भूयः स्नेहविचेष्टितैर्मृगदृशो नीतस्य कोटिं पराम्' । 'परां कोटिं स्नेहपरिचयविकासादधिगते' इत्यादि समानार्थकम् । 'कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितम्' इति वाक्यं वेदितव्यम् । केचित्तु आवरणात्ययात्प्रतिबन्धकनिवृत्तेरिति व्याचक्षते । प्रेम्ण उत्कृष्टत्वं च परकीयावेश्योपपत्याद्यविषयकत्वम् । तस्य सुमानुषस्य दाम्पत्यस्य । 'सुमानुषं तु दाम्पत्यम्' इत्यभिधानात् । इति प्राञ्च आहुः । अत एवैतद्विकृतिभूतदाम्पत्यार्थकमनिच्छितिशब्दस्य द्रविडभाषाप्रसिद्धिरपि । अन्ये तु 'प्रकरणानुगुण्याद्विशेषणस्वारस्यात्तच्छब्देन दाम्पत्ये लब्धे सुमानुषस्येति तद्विशेषणतया योजनीयम् । शोभनो मानुषो येन' इत्याहुः । केचित्तु 'सुमानुषस्य सौजन्यस्य' इत्याहुः । कथमपि सर्वप्रकारेणापि तत्प्रसिद्धमेकं मुख्यं भद्रं क्षेमं प्रार्थ्यते प्रकर्षेण याच्यते । अभिलष्यते वा । हि यस्मात्सुमानुषस्य भद्रमेकं प्रार्थ्यते तस्मात् सैव रणरकदायिनीत्यादिपूर्वेणान्वयः । अनर्थशङ्कीनि बन्धुमित्रहृदयानीति न्यायेनेति भावः । प्रेमसारे स्थितमित्यनेन मधुकटाहनिक्षिप्तरसालफलसादृश्यं व्यज्यते । अत्र फलविषयकौत्सुक्यप्रतिपादनादारम्भ उक्तः । तदुक्तम्–'औत्सुक्यमात्रमारम्भः फललाभाय भूयसे' इति ॥ ३९ ॥ **कर्णे एवमिवेति** । 'अर्थस्त्वेकेन विज्ञेयः पश्चाज्ज्ञात्वा

---

[illegible] २ अम्ह, जहा (यथा). ३ महाराअं दसरहं

**दुर्मुखः**—आस्ससदु देव्वो। (क)

**रामः**—( आश्वस्य। )

> **हा हा धिक्परगृहवासदूषणं य-**
> **द्वैदेह्याः प्रशमितमद्भुतैरुपायैः।**
> **एतत्तत्पुनरपि दैवदुर्विपाका-**
> **दालर्कं विषमिव सर्वतः प्रसृप्तम्** ॥ ४० ॥

तत्किमत्र मन्दभाग्यः करोमि। ( विमृश्य सकरुणम् ) अथवा किमन्यत्।

> **सतां केनापि कार्येण लोकस्याराधनं व्रतम्।**
> **यत्पूरितं हि तातेन मां च प्राणांश्च मुञ्चता** ॥ ४१ ॥

संप्रत्येव च भगवता वसिष्ठेन संदिष्टम्। अपि च।

> **यत्सावित्रैर्दीपितं भूमिपालै-**
> **र्लोकश्रेष्ठैः साधु शुद्धं चरित्रम्।**
> **मत्संबन्धात्कश्मला किंवदन्ती**
> **स्याच्चेदस्मिन्हन्त धिङ्मामधन्यम्** ॥ ४२ ॥

---

( क ) आश्वसितु देवः।

---

प्रसङ्गतः। कर्णे एवमिवेत्युक्त्वा काव्यबन्धे प्रयुज्यते॥' इत्युक्तत्वात्॥ **हा हेति**। परगृहवास एव दूषणम्। नान्यदिति भावः। आलर्कं श्वसंबन्धि प्रसक्तम्। पाठान्तरे 'प्रसृप्तम्' इति वा। एकत्र स्पर्शः कालान्तरेण सर्वतः प्रसरणमिति भावः॥ ४० ॥ मन्दभाग्योऽल्पभाग्यः। **सतामिति**। केनापि कार्येण। 'स्नेहं दयां च सौख्यं च यदि वा जानकीमपि' इत्युक्तरीत्या लोकस्याराधनं लोकस्य प्रीतिजनकव्यापारः। सतां धर्मशास्त्रस्मृत्यादीनां परं धर्मः श्रेष्ठत्वेनाभिमतः। तथा चापस्तम्बः—'यत्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः' इति। न चेदमननुष्ठानपराहतमित्याह—तत्प्रतीतमिति। 'अवश्यं पितुराचारः' इति स्फोरणार्थमिदम्। मां च मुख्यतममत्परित्यागानुषङ्गिकः तातस्य स्वप्राणत्याग इत्याह—प्राणांश्चेति। मुञ्चतेति हेतौ शतृ। प्राणत्यागहहेतुकं पूरणमित्यर्थः॥ ४१ ॥ **संप्रत्येव संदिष्टमिति**। 'युक्तः प्रजानामनुरञ्जनेऽस्याः' इति संदिष्टमिति भावः। **यदिति**। सावित्रैः सवितुः पुत्रैः। 'स्यापत्यम्' इत्य-

हा देवि देवयजनसंभवे हा स्वजन्मानुग्रहपवित्रितवसुंधरे हा निमिजनकनन्दिनि हा पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनि हा राममयजीविते हा महारण्यवासप्रियसखि हा तातप्रिये हा स्तोकवादिनि कथमेवंविधायास्तवायमीदृशः परिणामः ।

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥ ४३ ॥

---

सर्वाभ्यर्हमनुप्रभृतिराजभिर्दीपितं प्रकाशितं स्वयमनुष्ठितमनुष्ठापितं च चित्रमाश्चर्यभूतम् । कश्मला हेया । किंवदन्ती लोकवादः ॥४२॥ स्वतो निर्दोषेत्याह-हा देवि । उत्पत्तिवंशदोषोऽपि नास्तीत्याह—देवयजनसंभवे । स्वोत्पत्तिभूमेरपि शुद्धिजननीत्याह—स्वजन्मेति । संपर्कवशदोषोऽपि नास्तीत्याह—मुनिजनकेति । नन्दिनीत्यनेन औरसकन्यापेक्षयाभिमतेति व्यज्यते । गुरुदेवताभिमतेत्याह—पावकवसिष्ठेति । शीलेन वृत्तेन शाड्यते श्लाघ्यत इति शीलशालिनि । 'शाडृ श्लाघायाम्' इत्यस्माद्बहुलकात्कर्मणि णिनिः । डलयोरेकत्वम् । तद्विवृणोति—राममयेति । अनेन रावणस्मरणमपि दूरोत्सारितमिति व्यज्यते । रामस्य रावणस्मरणगन्धासहत्वात् त्विदमनुमेयं न । किं त्वनुष्ठानेन प्रकटितमित्याह—महारण्येति । प्रियत्वविशेषणम् निर्बन्धलोकवादादिव्यावृत्तिः । सखीत्यनेन दण्डकारण्यगमने पत्नीत्वप्रयुक्तप्राधान्यं नाङ्गीकृतम् । किं तु पुरुषसिंहरामसमप्रधानत्वमेवेति । 'समानं ख्यायते इति सखा' इति व्युत्पत्तेरुपलक्षणमिदम् । रामापेक्षया प्राधान्यस्यापि । 'अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान्' इत्युक्तत्वात् । तातस्य प्रिये अभिमते 'वधूचतुष्केऽपि' इत्यादिवक्ष्यमाणरीत्येति भावः । स्तोकं मितं वदन्तीत्यर्थः । 'सत्याय मितभाषिणाम्' इत्युक्तरीत्या । निमित्तलेशाभावेऽपि कथमयं परिणाम इति भावः । त्वयेति । त्वया जगन्ति पुण्यानि पुण्यवन्ति । मत्वर्थीयाच्प्रत्ययः । 'पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति ॥' इति त्वन्मतानुसारेण पापपुण्ययोरनुग्रहतौल्यादिति भावः । जनानामुपजीव्यविरोध इत्याह—त्वय्यपुण्या जनोक्तयः । अत्र त्वया जगन्ति पुण्यानीति भुवनानां पुण्यत्वमुक्त्वा जनोक्तय इति जनशब्दोपादानान्नैवं लोकान्तरस्थानामुपजीव्यविरोध इति व्यज्यते । उक्तिपदेन वस्तुस्थित्यभावाद्विषयप्रभावाच्च । इत्थं मनसा संभावनमपि नोचितम् । सुतरां बहिस्तदुक्तिः सापि जातेति व्यज्यते । जनानामुक्तय इति विग्रहः । कश्चिदित्थं प्रलपतीत्यपि न किंतु बहुजना

( दुर्मुखं प्रति । ) दुर्मुख ब्रूहि लक्ष्मणम् । एष ते नूतनो राजा रामः समाज्ञापयति । ( कर्णे । ) एवमेवम् । इति ।

दुर्मुखः—हा कहं दाणीं अग्गिपरिसुद्धाए गब्भट्ठिदपवित्तरहुउलसंताणाए देइए दुज्जणवअणादो एवं अणज्जं अज्झवसिदं देव्वेण । (क)

रामः—शान्तम् । कथं दुर्जनाः पौरजानपदाः ।

इक्ष्वाकुवंशोऽभिमतः प्रजानां
जातं च दैवाद्वचनीयवीजम् ।
यच्चाद्भुतं कर्म विशुद्धिकाले
प्रत्येतु कस्तद्यदतिदूरवृत्तम् ॥ ४४ ॥

तद्गच्छ ।

दुर्मुखः—हा देइ । ( इति निष्क्रान्तः । ) (ख)

---

( क ) हा कथमिदानीमग्निपरिशुद्धाया गर्भस्थितपवित्ररघुकुलसंतानाया देव्या दुर्जनवचनादेवमनार्यमध्यवसितं देवेन ।

( ख ) हा देवि ।

---

वचनम् । तेऽपि कदाचिदित्युक्त्वा विरमन्तीत्यपि न बहुकृत्वो वदन्तीति बहुवचनार्थः । अपुण्या इति व्यतिरेकोक्त्या कश्चिदपि कदाचिदपि न यथार्थं प्रत्येति नापि वक्तीति व्यज्यते । नाथवन्त इति । अहं लोकानामधीशः, मम त्वं नाथा । तथा च—'यस्यैते तस्य तद्धनम्' इति न्यायेन लोकानामपि त्वमेव नायिकेत्याशयः । यद्वा त्वं मय्यात्मतयावस्थिता, अहं च त्वयि तथावस्थितः । आह च हनूमान्—'अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् । तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ॥' इति । तथा च लौकिकैर्मयि प्रतिपद्यमानं लोकनाथत्वं त्वदीयमित्यर्थः । इत्याद्यूहनीयम्—त्वमनाथेति । त्वत्सत्तामात्रं मम लोकनाथत्वे प्रयोजनम्, अहं तु त्वत्कृते व्यर्थ इति भावः । विपरस्यसे विपन्ना भविष्यसि । पूर्ववियोगोऽपि रावणवधेप्सितत्वादसत्कल्प इति न तस्मिंस्त्वं विपन्ना अस्य तु वियोगस्य 'सौमित्रेरपि पत्रिणामविषये तत्र प्रिये क्वासि मे' इति वक्ष्यमाणरीत्या पूर्वोपायाविषयत्वात् इतः परमेव विपन्ना भविष्यसीति लृटा व्यज्यते । पूर्वार्धे विभावनाविशेषोऽलंकारः ।

रामः— हा कष्टम् । अतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः ।

शैशवात्प्रभृति पोषितां प्रियां
सौहृदादपृथगाश्रयामिमाम् ।
छद्मना परिददामि मृत्यवे
सौनिको गृहशकुन्तिकामिव ॥ ४५ ॥

तत्किमस्पर्शनीयः पातकी देवीं दूषयामि । ( इति सीतायाः शिरः स्वैरमुन्नमय्य बाहुमाकर्षन् । )

अपूर्वकर्मचण्डालमयि मुग्धे विमुञ्च माम् ।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् ॥ ४६ ॥

---

कः प्रत्येति । न कोऽपीत्यर्थः ॥ ४४ ॥ **हा कष्टमिति** । नृशंसः क्रूरः । अतिबीभत्सकर्मेति प्रसिद्धनृशंसाद्वयावृत्तिः । **शैशवादिति** । शैशवात्प्रभृति पोषितां बाल्यमारभ्य वर्धिताम् । अनेन 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इति न्यायः स्फोर्यते । ननु स्वाप्रियत्वे त्याज्यत्वमित्यत्राह— प्रियामिति । ननु तथापि दोषप्रसक्तौ का गतिरित्यत्राह—अपृथगाश्रयामिति । पृथगाश्रयरहितामित्यर्थः । ननु तथापि मनोवृत्तिरन्यत्रेत्यत आह—सौहृदादिति । इमामितीदंपदेन तात्कालिकान्तर्वत्नीत्वनिद्रावत्त्वादिकं परामृश्यते । छद्मना व्याजेन । सीताभिलषितवनप्रस्थापनव्याजेनेत्यर्थः । मृत्यवे परिददामि । देयसाकल्यात् दानसाकल्यम् । तदिमाम् । गर्भस्थशिशुद्वयं चेत्यर्थः । सौनिके जीवहिंसाजीविनि । 'कर्मणा यमभिप्रैति स संप्रदानम्' इति चतुर्थ्यर्थे सप्तमी । प्रथमान्तपाठोऽप्यस्ति । गृहशकुन्तिकाम् । 'अनुकम्पायां कन्' ॥४५॥ **अपूर्वेति** । अत्र मुग्धे विमुञ्च मामिति सिद्धसाध्यसमभिव्याहारन्यायेन अद्यतनमोचनप्रसञ्जकवतीत्यर्थो लभ्यते । मौग्ध्यस्य मोचनप्रसञ्जकत्वं च तदापादकसंपर्कापादनद्वारा । स च संबन्धो रावणप्रत्याख्यानपूर्वको लङ्कादेशीय एव । तथाहि— भवितव्यः परगृहवासो जातस्तथापि नैतावता ममात्याहितं प्रसज्जति । रावणो न मां बलात्कर्तुमर्हति । ततश्च तदभिमततदसंपादनेनैव कालयापनं सुकरम् । प्रत्याशया च स मां न हनिष्यति । रामस्तु इदानीं मां निर्दोषां परीक्ष्यानुमन्यमानोऽपि कदाचित्कस्यचिद्वचनमनुसरंल्लोकाराधनश्रद्धया मामरण्ये परित्यजेदित्यादिको विचारः सीतायाः स्यात् । तदा नैवंविधदुःखानुभवप्रसक्तिरिति तदिदं मौग्ध्यस्य विपरीतयोजकत्वमित्याशयः । सर्वमिदं निर्भरातिशयवो-

( उत्थाय । ) हन्त विपर्यस्तः संप्रति जीवलोकः । पर्यवसितमद्य जीवितप्रयोजनं रामस्य। शून्यमधुना जीर्णारण्यं जगत्। असारः संसारः। कष्टप्रायं शरीरम्। अशरणोऽस्मि किं करोमि का गतिः। अथवा

---

क्रूर इति भावः। स हि रावणो न सीतायाः प्राणहानिकरोऽभवत्। अहं तु तत्कारी भवामीति। पूर्वोक्तमौढ्यहेतुकरामसंश्रयणमेवाह—श्रितासीति। द्रुमत्वोक्तिर्भूयस्त्वाभिप्रायात्। दुर्विपाकत्ववचनमत्यन्तक्रौर्यातिशयप्रतिपत्त्यर्थम्। चन्दनभ्रान्त्ये त्यतद्दुःखभूयस्त्वावर्जनीयत्वख्यापनार्थम्। अन्यभ्रान्तौ प्रवृत्तिमान्द्यादिकं स्यात्। असीत्यनेनाद्यापि न मुञ्चसीत्यपि व्यज्यते। श्रितेति कर्तृवाचकनिष्ठान्तम्। तेन श्रयणस्य लङ्कादेशीयत्वलाभः। अयमाशयः—लोके हि फलवज्जातीयानामपि वृक्षाणामफलत्वे छेद एवोचितः। अनर्थावहत्वे तु सुतराम्। विषवृक्षस्य तु छेदे का प्रतिहतिः। तस्यापि दुर्विपाकत्वे सर्वथा छेद्यत्वमेव। तथापि 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इति न्यायेन यदि छेदप्रतिषेधः, तर्हि तस्य परित्यागे का प्रतिहतिः। अत्र क्रूररामकर्मकसंश्रयणप्रतिबिम्बस्य सीताप्रस्तुतकर्तृकदुर्विपाकविषद्रुमाश्रयणस्य वर्णनाल्ललितालंकारः। 'प्रस्तुते वर्ण्यवाक्यार्थप्रतिबिम्बस्य वर्णनम्। ललितम्' इति लक्षणात्॥ ४६॥ हन्तेति दुःखे। संप्रति सीताविरहे। विपर्यस्तोऽन्यथाभूतः। साहित्ये 'यस्तया सह स स्वर्गो निरयो यस्तया विना' इति रामायणोक्तरीत्या जीवलोकस्य स्वर्गत्वम्। वियोगे तु नरकत्वमेवेति। स्वर्गान्यस्य नरकस्यैव स्वारसिकत्वात्प्राणिनां नरकप्राप्तावपि नात्मवस्तुनाशः। मम तु सीतामयजीवितत्वात्तन्नाशे जीवितनाश इति। अद्यावसितमिति समाप्तं जीवितमेव प्रयोजनम्। जीवितमिति वक्ष्यमाणमिहानुसंधेयम्। सीताविरहितजीवितं निष्प्रयोजनमित्यर्थः। यत एवं ततोऽधुना जीर्णारण्यं जगत्स्वर्गादिकं ह्यात्मनः स्थिरत्वे कालान्तरानुभाव्यं स्यात्। 'अनादौ संसारे' इति न्यायात्। आत्मवस्तुनाशे तु स्वानुपभोगात् जीर्णारण्यत्वम्। सीतासाहित्ये हि अरण्यस्यापि पञ्चवट्याः 'यस्यां ते दिवसाः' इति रीत्या स्वगृहत्वात् तद्वियोगे तु स्वगृहस्यापि जीर्णारण्यत्वमित्याशयः। असारः शून्यः। काष्ठप्रायं शरीरम्। 'ज्योत्स्नेव हिमदीधितेः' इत्युक्त्या यथा चन्द्रस्य कौमुद्यभावे काष्ठप्रायता तद्वत्तस्येति भावः। अथ पूर्ववत्। 'सुग्रीवं शरणं गतः', 'सागरं शरणं गतः' इत्यादिकस्य नावकाश इत्याह—अशरणोऽस्मीति। पूर्ववत्सेतु-

जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।
यां देवयजने पुण्ये पुण्यशीलामजीजनः ॥ ५१ ॥

( इति रुदन्निष्क्रान्तः । )

**सीता**—हा सोम्य अज्जउत्त कहिंसि । ( सहसोत्थाय । ) हद्धी हद्धी दुस्सिविणेण[२] विप्पलद्धा अहं अज्जउत्तं आक्कंदामि । ( विलोक्य । ) हद्धी हद्धी एआइणिं मं पसुत्तं उज्झिअ गदो[३] अज्जउत्तो । किं दाणी एदं । होदु से कुप्पिस्सं जइ तं पेक्खन्ती अत्तणो पहविस्सं । को एत्थ परिअणो । (क)

( प्रविश्य । )

**दुर्मुखः**—देइ कुमारलक्खणो विण्णवेदि सज्जो रहो । आरुहदु देइ त्ति । (ख)

**सीता**—इअं आरुहामि[४] । ( उत्थाय परिक्रम्य । ) । परिप्फुरदि विअ मे गब्भभारो ता सिहिलं गच्छह्म । (ग)

**दुर्मुखः**—इदो इदो देइ । (घ)

---

(क) हा सौम्य आर्यपुत्र कुत्रासि । हा धिक् हा धिक् दुःस्वप्नेन विप्रलब्धाहमार्यपुत्रमाक्रन्दामि । हा धिक् हा धिक् एकाकिनीं मां प्रसुप्तामुज्झित्वा गत आर्यपुत्रः । किमिदानीमेतत् । भवतु तस्मै कोपिष्यामि यदि तं प्रेक्षमाणात्मनः प्रभविष्यामि । कोऽत्र परिजनः ।

(ख) देवि कुमारलक्ष्मणो विज्ञापयति सज्जो रथः । आरोहतु देवीति ।

(ग) इयमारोहामि । परिस्फुरतीव मे गर्भभारस्तच्छिथिलं गच्छावः ।

(घ) इत इतो देवी ।

---

गमिष्यसीति भावः । भगवति सर्वज्ञे । सुश्लाघ्यां निर्दोषां निरुपप्लवां वा । **जनकानामिति** । यत्कृत्स्नं गोत्रमङ्गलम् । यदिति विधेयापेक्षया क्लीबम् । अजीजनः । उत्पादितवत्यसीत्यर्थः । अत्र बिन्दुर्नाम संध्यङ्गमुक्तम् । दाम्पत्यविशेषविच्छेदहेतुत्वात्पुनरच्छेदकारणत्वाच्च । तदुक्तम्—'अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्' इति ॥ ५१ ॥ कोऽत्र परिजनः । परिजनस्य मध्ये कोऽत्र संनिहित इत्यर्थः । परिजनस्येति निर्धारणे षठ्येकवचनान्तम् । निर्धारणे षष्ठीप्रयोगोऽप्यस्ति ॥ सज्जो गमनाय संनद्धः ॥ रघुकुलदेवते लक्ष्मीनारा-

---

१ ताम् २ दुस्सिविणअरणरणअविप्पलद्धा अज्जउत्तसुण्णं विअ अत्ता पेक्खामि

**सीता**—णमो तवोधणाणं णमो रहुउलदेअदाणं णमो अज्जउत्तचरणकमलाणं णमो सअलगुरुअणाणं। (क)

(इति निष्क्रान्ताः सर्वे।)

इति महाकविश्रीभवभूतिविरचिते उत्तररामचरिते
चित्रदर्शनो नाम प्रथमोऽङ्कः।

---

(क) नमस्तपोधनेभ्यो नमो रघुकुलदेवताभ्यो नमो आर्यपुत्रचरणकमलेभ्यो नमः सकलगुरुजनेभ्यः।

---

यण।विति प्रसिद्धमेव। तन्नमस्कारो यात्राकाले विहितः। 'आदित्यमण्डले विष्णुं ध्यात्वा यात्रां प्रवर्तयेत्' इति स्मरणात्॥

दाशरथिवंशजनुषो भूसारजवीरराघवार्यस्य।
उत्तररामचरित्रव्याख्याङ्केष्वादिमः प्रायात्॥

इति श्रीवाधूलवीरराघवविरचितायां भवभूतिभावतलस्पर्शिन्यासमाख्यायामुत्तररामचरितव्याख्यायां प्रथमोऽङ्कः॥

( नेपथ्ये )

स्वागतं तपोधनार्याः।

( ततः प्रविशत्यध्वगवेषा तापसी । )

तापसी—अये वनदेवतेयं फलकुसुमपल्लवार्घ्येण मामुपतिष्ठते।

( प्रविश्य )

वनदेवता—( अर्घ्यं विकीर्य । )

यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति।
तरुच्छाया तोयं यदपि तपसां योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः॥ १॥

नेपथ्य इति। 'कुशीलवकुटुम्बस्य स्थली नेपथ्यमिष्यते' इत्युक्तातिरस्करिणीतिरोहितनर्तनभूमिकापरिग्रहौपयिकस्थानविशेष इत्यर्थः॥ वनदेवतेति। पल्लवार्घ्येण पल्लवयुक्तपूजाद्रव्येण दूरात् प्रविष्टा सती उपतिष्ठते पूजयति। देवतात्वारोपादात्मनेपदम्। दूरादित्यपादाने पञ्चमी। यद्वा मामुपतिष्ठते संगता भवति। 'गङ्गा यमुनामुपतिष्ठते' इतिवत् उभयत्रापि 'उपाद्देवपूजा—' इत्यादिना तङ्॥ अर्घ्यं वितीर्य दत्त्वा। यथेच्छमिति। इदम्। मदीयमित्यर्थः। वनं वनमेव न तु स्पृहणीयपुरप्रासादादिकमित्यपरितोषो व्यज्यते। तथापि 'अविद्यमाने वर्णोऽपि' इति न्यायेन यथाधिकारं सभाजयितव्यमेवेत्याह—यथेच्छाभोग्यं इच्छामनतिक्रम्य यथेच्छम्। यथेच्छं आभोग्यमिति विग्रहः। इच्छानिवृत्तिपर्यन्तमसंकोचेनोपभोगार्हमित्यर्थः। व इति पूजायां बहुवचनम् अतिथिसामान्याभिप्रायकं वा। अयं मे सुदिवसः साधुजनसंपर्कादिति भावः। सतां विद्यमानानामेव न तु प्रसादनादिकुर्वतामित्यर्थः। सद्भिः साधुभिः सह सङ्गः संपर्कः कथमपि कृच्छ्रेण पुण्येन भवति साधुजनसंपर्कलाभः प्रणिपातादिसाध्यो भवति। तदभाववतां तु दुष्टहेतुभावात् केवलादृष्टसाध्यो भवतीति भावः। यद्वा कथमपि सतां येन केनप्रकारेण वर्तमानानाम्। कामचारे स्थितानामित्यर्थः। सद्भिः ब्रह्मविद्भिरित्यर्थः। 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुतेः। सङ्गः संपर्कः पुण्येन हि भवति। अयमाशयः—'तस्मादेवंविदी नासीत' इति श्रुत्या ब्रह्मज्ञानवतां तच्छून्यैः सहवासादिकं प्रतिषिद्धम्। एवं च तेषां तैः सङ्गः पुण्यैकसाध्य इति। इदं च स्वनिकर्षभाव-

१ ०नार्यै, २ कुसुमगर्भेण दारुणां, ३ वितीर्य, ४ यथेच्छाभोग्यं, ५ ...

तापसी—किमत्रोच्यते ।

> प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
> प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
> पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
> रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २ ॥

( उपविशतः । )

वनदेवता—कां पुनरत्रभवतीमवगच्छामि ।

तापसी—आत्रेय्यस्मि ।

वनदेवता—आर्ये आत्रेयि कुतः पुनरिहागम्यते। किंप्रयोजनो वा दण्डकारण्यप्रचारः ।

आत्रेयी—

> अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
> भूयांस उद्गीथविदो वसन्ति ।

---

नाकार्यम् । फलं वा मूलं वा इतोऽन्यदपि तपसां योग्यमशनम् । नीवारपाण्डुपत्रवातजलादिकमित्यर्थः । तदपि तच्च पराधीनं नेति ॥ १ ॥ प्रियेति । प्रियप्राया प्रियप्रचुरा युक्ता चेत्यर्थः । वृत्तिः कायिकव्यापारः । तथापि वाक्रौर्ये महान्दोष इत्यत आह—विनयमधुरो वाचि नियमः विनयेन स्वनिकर्षभावनारूपेण स्वोत्कर्षाननुसंधानरूपेण वा मधुरः प्रियः वाचि नियमः सत्याय मितभाषित्वम् । तथापि मनोवृत्तिदौष्ट्यं स्यादत आह—प्रकृत्या कल्याणी मतिः प्रकृत्या स्वभावतः कल्याणी श्रेयस्विनी । तथाप्यसत्सङ्गवशाद्वैपरीत्यं स्यादत आह—अनवगीतः । अनिन्दित इत्यर्थः । तदिदं वृत्तिवाचिनियमादिपरिचयसमुदायरूपं विजयते सर्वोत्कर्षेण वर्तते । तत्कथंभूतमित्याह—पुरो वा पश्चाद्वा भूतभविष्यत्कालयोः । तत्तत्पुरुषसंनिधानयोरिति वार्थः । अविपर्यासितरसं अन्यूनस्वभावम् । रसपदेन प्रियत्वं व्यज्यते । अनुपधि निर्व्याजं विशुद्धं प्रामादिकदोषरहितं रहस्यम् । ‘ शीलं संवसता ज्ञेयम् ’ इति न्यायेन चिरकालशुश्रूषादिभिरेव ज्ञातुं शक्यं न तु दाम्भिकवृत्तिवत्स्वयं

प्रवासप्रयासः ।

**आत्रेयी**—तत्र महानध्ययनप्रत्यूह इत्येष दीर्घप्रवासोऽङ्गीकृतः ।

**वनदेवता**—कीदृशः ।

**आत्रेयी**—तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्तमानं दारकद्वयमुपनीतम् । तत्खलु न केवलमृषीणामपि तु चराचराणां भूतानामान्तराणि तत्त्वान्युपस्नेहयति ।

**वनदेवता**—अपि तयोर्नामसंविज्ञानमस्ति ।

**आत्रेयी**—तयैव किल देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः ।

**वनदेवता**—कीदृशः प्रभावः ।

**आत्रेयी**—तयोः किल सरहस्यानि जृम्भकास्त्राण्याजन्मसिद्धानीति ।

**वनदेवता**—अहो नु भोश्चित्रमेतत् ।

---

सीत' इति परस्मिन् ब्रह्मणि उद्गीथदृष्टिं कुर्वन्त इत्यर्थः । दहरविद्यादीनामुपलक्षणम् । सकलवेदान्ततात्पर्यपर्यालोचनशीला इति भावः । तेभ्यः अधिगन्तुं तत्कृतव्याख्यानेन ज्ञातुम् । 'आख्यातोपयोगे' इति पञ्चमी । पर्यटामि । 'अट गतौ' ॥ ३॥ **यदा तावदिति** । पुराणश्चासौ ब्रह्मवादी चेति विग्रहः । ब्रह्म परमात्मानं वेदान्वा वदतीति । णिनिः । पुराणत्वे प्राचेतसमिति हेतुकथनम् । ब्रह्मपारायणाय वेदान्तविद्याध्ययनाय । पारायणं नाम आदित आरभ्यान्तादविच्छेदेनाध्ययनमुपासते । **तदिति** । प्रवासो देशान्तरगमनम् । **तस्मिन्निति** । प्रत्यूहः विघ्नः ॥ **तस्येति** । स्तन्यत्यागमात्रं यस्मिन्निति बहुव्रीहिः कप्रत्ययः । दारकद्वयं शिशुद्वयम् । **तदिति** । तस्य वाल्मीकेः संनिधानीकरोति ॥ **अपीति** । नाम्नोऽभिलापकशब्दस्य संज्ञानं संकेतसबन्ध-

१ तस्मिन्हि. २ केवलं तस्यापि तु तिरश्चामप्यन्तःकरणानि.

**आत्रेयी**—तौ च भगवता वाल्मीकिना धात्रीकर्म वस्तुतः परिगृह्य पोषितौ परिरक्षितौ च । निर्वृत्तचौलकर्मणोश्च तयोस्त्रयीवर्जमितरास्तिस्रो विद्याः सावधानेन परिनिष्ठापिताः । समनन्तरं च गर्भैकादशे वर्षे क्षात्रेण कल्पेनोपनीय गुरुणा त्रयीविद्यामध्यापितौ । न ह्येताभ्यामतिप्रदीप्तप्रज्ञामेधाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति । यतः ।

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति च पुनर्भूयान्भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदां चयः ॥ ४ ॥

**वनदेवता**—अयमसावध्ययनप्रत्यूहः ।

**आत्रेयी**—अन्यश्च ।

**वनदेवता**—अथापरः कः ।

**आत्रेयी**—अथ स ब्रह्मर्षिरेकदा माध्यंदिनसवनाय नदीं तमसामनुप्रपन्नः । तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन विध्यमानं

---

करणम् ॥ **तयोरिति** । जन्मसिद्धानि जन्मना ज्ञातानि, न तूपदेशेन ॥ **तौ चेति** । धात्रीकर्मेत उपमातृव्यापारेण । पोषितौ क्षीरादिना वर्धितौ । रक्षितौ । पिपीलिकादिभ्य इति भावः । **निर्वृत्तेति** । निर्वृत्तं निष्पन्नम् । त्रयीवर्जं त्रयीं वर्जयित्वा । अङ्गान्यपीति शेषः । इतराः आयुर्वेदो धनुर्वेदस्तथा गान्धर्वनामकः" इत्युक्ता इत्यर्थः । सावधानेन । वाल्मीकिनेति शेषः । परिनिष्ठापिताः सम्यङ् निष्पादिताः । **तदनन्तरमिति** । एकादशानां पूरणं एकादशम् । 'तस्य पूरणे' इति डट्प्रत्ययः । गर्भात् गर्भवर्षात् एकादशं गर्भैकादशं तस्मिन्नित्यर्थः । 'गर्भैकादशे राजन्यम्' इति स्मृतेः । कल्प्यतेऽनुष्ठीयतेऽनेनेति कल्पः अनुष्ठानपरिपाटीप्रकाशकग्रन्थः । **न त्वेताभ्यामिति** । दीप्तिः प्रतिभा । प्रज्ञा ज्ञानं उक्तार्थग्रहणम् । **वितरतीति** । तयोः प्राज्ञजडयोः ज्ञाने शक्तिं न करोति प्राज्ञस्य ज्ञाने अपूर्वां शक्तिं न जनयति जडस्य ज्ञाने शक्तिं नापहन्ति जडस्य ज्ञाननिष्ठां शक्तिं न नाशयति । बिम्बग्राहे प्रतिबिम्बज्ञानोत्पादने मणिः वज्रं रत्नसामान्यं वा । मृदादयः । आदिपदात् वृक्षपाषाणलोष्टग्रहणम् ॥ ४ ॥ अथेति प्रश्ने ॥ **अथेति** । माध्यंदिनसवनाय

ददर्श । आकस्मिकप्रत्यवभासां च देवीं वाचमव्यतिकीर्णवर्णामानुष्टुभेन छंदसा परिणतामभ्युदैरयत् ।

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ ५ ॥**

**वनदेवता**—चित्रमाम्नायादन्यो नूतनच्छन्दसामवतारः ।

**आत्रेयी**—तेन खलु पुनः समयेन तं भगवन्तमाविर्भूतशब्दब्रह्मप्रकाशमृषिमुपसंगम्य भगवान्भूतभावनः पद्मयोनिरवोचत्—ऋषे प्रबुद्धोऽसि वागात्मनि ब्रह्मणि तद्ब्रूहि रामचरितम् । अव्याहतज्योतिरार्षं ते प्रातिभं चक्षुः । आद्यः कविरसि' इत्युक्त्वान्तर्हितः । अथ स भगवान्प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय ।

---

मध्यंदिनसंबन्धिकर्मणे । अनुप्रपन्नः प्राप्तः । तत्रेति । युग्मं द्वन्द्वं यथा तथा चरत इति युग्मचारिणौ तयोः क्रौञ्चयोः पक्षिविशेषयोः । व्याधेन पुलिन्देन । ददर्श अपश्यत् । आकस्मिकप्रत्यवभासां निर्हेतुकाविर्भावाम् । आनुष्टुभेन छन्दसा । स्वार्थिकोऽण्प्रत्ययः । **मा निषादेति** । प्रतिष्ठां तु अम गमः इति पदचतुष्टयं निषादपक्षे बोध्यम् । एवं च माङ्योगेऽडागमनिषेध उपपद्यते । अमेत्यस्य न विद्यते मा लक्ष्मीः यस्येति विग्रहः । एवं च अलक्ष्मीकेति निषादं प्रति मन्युर्गम्यते । अत एव भगवन्तं प्रति रावणवधजनितप्रीत्यतिशयेन मानिषादेति सलक्ष्मीकत्वप्रतिपादनम् । भगवत्परत्वे मा लक्ष्मीः निषीदत्यस्मिन्निति मानिषादः । बाहुलकादधिकरणे घञ् । तस्य संबुद्धिः । निषेधार्थमाशब्देन अडागमसमर्थनं तु क्लिष्टम् । प्रतिष्ठा आस्पदम् । व्याधपक्षे मा गमः न गच्छेः भगवत्पक्षे अगमः प्राप्तवानिति । समाः संवत्सरान् । अत्यन्तसंयोगे द्वितीया ॥ ५ ॥ आम्नायात् वेदात् ॥ **तेनेति** । तेन समयेन कालेन । भूतेन प्रजाः भावयति उत्पादयतीति विग्रहः । यद्वा भूतं सत्यम्, निर्निरोधमिति वा । भावना अध्यवसायः यस्येति वा । पद्मयोनिः भगवन्नाभिकमलजातः । अनेन पूर्वोक्तभूतभावनत्वप्रयुक्तपरत्वशङ्का निराकृता । प्रबुद्धोऽसि प्रकृष्टज्ञानवानसि । वागेव आत्मा यस्य तस्मिन् ब्रह्मणि शब्दब्रह्मणि । वाचो

**वनदेवता**—हन्त तर्हि मण्डितः संसारः ।

**आत्रेयी**—तस्माद्देवोचं तत्र हि महानध्ययनप्रत्यूह इति ।

**वनदेवता**—युज्यते ।

**आत्रेयी**—विश्रान्तास्मि भद्रे । संप्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि ।

**वनदेवता**—इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण ।

**आत्रेयी**—( सास्रम् । ) अप्येतत्तपोवनम् । अप्येषा पञ्चवटी । अपि सरिदियं गोदावरी । अप्ययं गिरिः प्रस्रवणः । अपि जनस्थानवनदेवता वासन्ती त्वम् ।

**वनदेवता**—सर्वमप्येतत्सर्वम् ।

**आत्रेयी**—हा वत्से जानकि ।

**स एष ते वल्लभबन्धुवर्गः**
**प्रासङ्गिकीनां विषयः कथानाम् ।**
**त्वां नामशेषामपि दृश्यमानः**
**प्रत्यक्षदृश्यामिव नः करोति ॥ ६ ॥**

**वासन्ती**—( सभयम् । स्वगतम् । ) कथं नामशेषामित्याह । ( प्रकाशम् । ) आर्ये किमत्याहितं सीतादेव्याः ।

**आत्रेयी**—न केवलमत्याहितं सापवादमपि । ( कर्णे । ) एवमेवम् ।

---

कैयटमतानुसारेण वा । अव्याहतज्योतिः अप्रतिहतप्रकाशं आर्षं ऋषिसंबन्धि योगजन्यज्ञानं चक्षुः नेत्रं ज्ञानमिति फलितोऽर्थः । 'तत्सर्वं मत्प्रसादेन विदितं ते भविष्यति' इत्यादि रामायणे द्रष्टव्यम् । आद्यः कविरसीत्युक्त्वा अनुगृह्य । अन्तर्हितः परोक्षतां गताः ॥ स इति । दृश्यमानः दृष्टिविषयीभूतः । प्रासङ्गिकीनां प्रसक्त्यनुप्रसक्त्या जातानां कथानां प्रश्नप्रतिवचनरूपाणां वाक्यसंदर्भाणां विषयः प्रतिपाद्यः वल्लभशाखिनां स्वयं वर्धितत्वात् अत्यर्थप्रीतिविषयाणां

**वासन्ती**—अहह दारुणो दैवनिर्घातः । ( इति मूर्च्छति । )

**आत्रेयी**—भद्रे समाश्वसिहि समाश्वसिहि ।

**वासन्ती**—हा प्रियसखि हा महाभागे ईदृशस्ते निर्माणभागः । हा रामभद्र । अथवा अलं त्वया । आर्ये आत्रेयि अथ तस्मादरण्यात्परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्याः किं वृत्तमिति काचिदस्ति प्रवृत्तिः ।

**आत्रेयी**—नहि नहि ।

**वासन्ती**—हा कष्टम् । अरुन्धतीवसिष्ठाधिष्ठितेषु रघुकुटुम्बकेषु जीवन्तीषु च प्रवृद्धासु राज्ञीषु कथमिदं जातम् ।

**आत्रेयी**—ऋष्यशृङ्गाश्रमे गुरुजनस्तदासीत् । संप्रति तु परिसमाप्तं तद्द्वादशवार्षिकं सत्रम् । ऋष्यशृङ्गेण च संपूज्य विसर्जिता गुरवः । ततो भगवत्यरुन्धती नाहं वधूविरहितामयोध्यां गमिष्यामीत्याह । तदेव राममातृभिरनुमोदितम् । तदनुरोधाद्भगवतो वसिष्ठस्यैं परिशुद्धा वाचो वाल्मीकितपोवनं गत्वा तत्र वत्स्याम इति ।

**वासन्ती**—अथ स राजा किमाचारः संप्रति ।

**आत्रेयी**—तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः ।

**वासन्ती**—हा धिक् परिणीतमपि ।

**आत्रेयी**—शान्तं पापम् । नहि नहि ।

**वासन्ती**—का तर्हि यज्ञे सहधर्मचारिणी ।

**आत्रेयी**—हिरण्मयी सीताप्रतिकृतिः ।

---

स्पष्टार्थम् । अथवेति जनवाक्यिप्रधानस्य दुःशकत्वादिति भावः । किं वृत्तमिति निष्पन्नमिति । प्रवृत्तिः वार्ता । आसीत् अभूत् । किमिति काक्वा योजनीयम् । **संप्रति परिसमाप्तमिति** । इदमेवाभिसंधाय पूर्वोक्तव्याख्यानमिति न विस्मर्तव्यम् । वधूविरहितां स्नुषाविरहिताम् । **तदन्विति** । तदनुरोधात् तदनुसरणात् । श्रद्धा निश्चयः ॥ **अथेति** । किमाचारः कीदृशव्यापारवान् । **तेनेति** । राजक्रतुः राज्ञां साधारणो यः क्रतुः क्रतुराजो वा अश्वमेधः । राजदन्तादित्वात् परनिपातः ॥ **सीतेति** । सीतायाः प्रतिकृतिः प्रतिमा ।

वासन्ती—हन्त भोः ।

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ॥ ७ ॥

आत्रेयी—विसृष्टश्च वामदेवाभिमन्त्रितो मेध्योऽश्वः । उपकल्पितास्च तस्य यथाशास्त्रं रक्षितारः । तेषामधिष्ठाता च लक्ष्मणात्मजश्चन्द्रकेतुरवाप्तदिव्यास्त्रसंप्रदायश्चतुरङ्गसाधनान्वितोऽनुप्रहितः ।

वासन्ती—( सस्नेहकौतुकास्रम् । ) कुमारलक्ष्मणस्यापि पुत्रः । हन्त मातर्जीवामि ।

आत्रेयी—अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताडमब्रह्मण्यमुद्घोषितम् । ततो न राजापचारमन्तरेण प्रजानामकालमृत्युः संचरतीत्यात्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत्—

---

गृहिणीकृता धर्मपत्नीकृता ॥ **वज्रादपीति** । अयमाशयः—निर्दोषायां सीतायां रामहृदयस्य मृदुत्वमेव स्वाभाविकम् । कठोरत्वं तु मूर्खलोकानुसरणार्थत्वादागन्तुकमिति प्रकृतिकरणादवगम्यत इति । न च 'यस्य भार्या विदूरस्था यदि सा दूषितापि वा । अनिच्छुः प्रतिकूला च तस्याः प्रतिकृतिः क्रिया ॥' इति स्मरणात् प्रकृतिकरणं मृदुत्वानुपपादकमिति वाच्यम् । तस्य परिणयान्तराशक्तानिरवकाशक्रियाविषयत्वात् । अश्वमेधादेः सावकाशत्वात् परिणयान्तरशक्तत्वात् । किंच सीतासदृशप्रतिमाकरणं मृदुत्वापादकमेव । एतादृशविचारसाध्यत्वात् 'को हि विज्ञातुमर्हति' इति तज्ज्ञानस्वरूपयोग्यतापि दुर्लभेत्युक्तम् । अत्रार्थान्तरन्यासालंकारः ॥ ७ ॥ वामदेवेन अनुमन्त्रितः अनुज्ञातः वसिष्ठासंनिधानादिति भावः । मेध्याश्वः यज्ञीयाश्वः । प्रकृत इति यथाशास्त्रं शास्त्रोक्तन्यायेन । तेषामिति 'चतुःशता रक्षन्ति यज्ञस्याघातये' इत्यादिश्रुतिमनुलङ्घ्य अधिष्ठाता नियामकः अनुप्रहितः ॥ **अत्रान्तर इति** । अब्रह्मण्यमिति वचनम् उद्घोषितं उच्चैरुच्चारितम् । **तत इति** । राजापचारं राजदोषम् । निरूपयति मीमांसमाने । करुणामये परदुःखदुःखित्वरूपानुक-

दिव्यपुरुषः—जयतु जयतु देवः ।

दत्ताभये त्वयि यमादपि दण्डधारे
संजीवितः शिशुरसौ मम चेयमृद्धिः ।
शम्बूक एष शिरसा चरणौ नतस्ते
सत्सङ्गजानि निधनान्यपि तारयन्ति ॥ ११ ॥

रामः—द्वयमपि प्रियं नः । तदनुभूयतामुग्रस्य तपसः फलम् ।

यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च संपदः ।
वैराजा नाम ते लोकास्तैजसाः सन्तु ते शिवाः ॥ १२ ॥

शम्बूकः—युष्मत्प्रसादादेवैष महिमा । किमत्र तपसा । अथवा महदुपकृतं तपसा ।

अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यो
मामन्विष्यन्निह वृषलकं योजनानां शतानि ।
क्रान्त्वा प्राप्तः स इह तपसां संप्रसादोऽन्यथा चेत्
क्वायोध्यायाः पुनरुपगमो दण्डकायां वने वः ॥ १३ ॥

---

नायाम् । अशरीरवाण्या शिशुजीवननिश्चयेऽपि पावकवचनेन सीतायाः निर्दोषत्वनिश्चयेऽपि फलाभाववत् स्वीयदैवविपर्ययेणात्रापि तथा स्यादित्याशयः ॥ **प्रविश्येति** । दिव्यपुरुषः शम्बूकशरीरं विहाय देवत्वेनेति भावः । **दत्ताभय इति** । यमादपि दत्ताभये त्वयि दण्डधारे सतीत्यन्वयः । यमहेतुकभयनिवारणदातरि यमशासितरि त्वयि सति असौ शिशुः बुद्धिस्थो ब्राह्मणशिशुः । निधनानि मरणानि तारयन्ति । संसाराब्धिमिति शेषः ॥ ११ ॥ **तदिति** । आनन्दाः आत्मानुभवजन्या हर्षाः । मोदाश्च दिव्यविषयानुभवजन्या हर्षाः । संपदः अणिमादिविभूतयः । वैराजा नाम वैराजा इति प्रसिद्धाः ॥ १२ ॥ **युष्मत्प्रसादेति** । 'धातुः प्रसादान्महिमानमीदृशम्' इति श्रुतिः प्रत्यभिज्ञायते । किमत्र तपसा । तपसा किमत्रेत्यर्थः । **अथवेति** । तपःकर्तृको महोपकार इति भावः । तदुपपादयति—**अन्वेष्टव्य इति** । यदसीति प्रसिद्धवन्निर्देशात् 'सोऽन्वेष्टव्यः' इति श्रुतिः प्रत्यभिज्ञायते । अनेन कारणत्वमप्युक्तम् । 'कारणं तु ध्येयः' इति श्रुतेः । न केवलं प्रधानहिरण्यगर्भादिवत् कारणत्वम्, किंतु निरुपाधिकस्वामित्वं स्वीकृतमित्याह—लोकनाथ इति । 'एष सर्वभूताधिपतिः' इति श्रुतिः प्रत्यभिज्ञायते । पूर्वोक्तान्वेष्टव्यत्वादिफल-

स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
स्थाने स्थाने मुखरककुभो झांकृतैर्निर्झराणाम्।
एते तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः
संदृश्यन्ते परिचितभुवो दण्डकारण्यभागाः ॥ १४ ॥

**शम्बूकः**—दण्डकैवैषा। अत्र किल पूर्वं निवसता देवेन

चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम्।
त्रयश्च दूषणखरत्रिमूर्धानो रणे हताः ॥ १५ ॥

येन सिद्धक्षेत्रेऽस्मिञ्जनस्थाने मादृशामपि जानपदानामकुतोभयः संचारो जातः।

---

माह-शरण्य इति। 'एष सर्वभूतपालः' इत्यादयः श्रुतयः प्रत्यभिज्ञाप्यन्ते। नहि पालनसामर्थ्यमृते सर्वेश्वरत्वहानिरित्युपबृंहणात् हरहिरण्यगर्भादीनां रक्षकत्व-शङ्कानिरासः। इदं च घण्टाकर्णादिविषये स्पष्टम्। वृषलकं अज्ञातो वृषलो वृषलकः तम्। अज्ञाते कन्प्रत्ययः। अनेन प्रयासेनान्वेषणीयत्वं स्वस्य सूच्यते। अन्विष्यन्। न तु चारादिनान्वेषयन्निति भावः। योजनानां शतानि अयोध्यादण्डकयोः योजनेयत्तानिश्चयेऽपि एवमुक्तिः कृत्स्नभूमण्डलान्वेषणा-नन्तरं अत्र प्राप्त इति सूचयति। तन्मूलं तु 'पृथिव्यां तप्यते तपः' इति अशरीरवाण्या पृथिव्यामिति सामान्योक्तिः। प्राप्तः। न तु मां दूतैः प्रापि-तवानित्यर्थः। वृषलक इत्यत्र वृषं धर्मं लुनातीति वृषल इति व्युत्पत्त्या 'शुश्रूषा शूद्रस्य' इत्युक्तस्वधर्मच्छेदेन स्वतन्त्रतपश्चरणरूपस्वदोषाधीनत्वं विवक्षितम्। तपसां संप्रसादः तपःकृतानुग्रहः। पुनरित्यनेन अपूर्ववनविलोकनस्पृहयान्य-थासिद्धिर्वारिता। वनपदं दण्डकायामपि गमनप्रदेशत्वसूचनार्थम्। एवं सर्व-प्रकारेणापि दुर्घटभवदागमनसंघटकत्वात् तपसां प्रसाद इति भावः ॥ १३ ॥ **स्निग्धेति**। श्यामाः नीलाः। आभोगः विपुलावकाशः। रूक्षाः चित्तक्षोभ-कराः। गर्ताः अवटाः ॥ १४ ॥ **चतुर्दशेति**। दूषणखरत्रिमूर्धान इति समासान्तविधेरनित्यत्वात्। 'द्वित्रिभ्यां षमूर्ध्नः' इति षप्रत्ययाभावः। केचित्तु दूषणखरत्रिमूर्धा नः इति पदद्वयं कृत्वा नः अस्माकं रणे दूषणखरत्रिमूर्धाः हता इति षप्रत्ययान्तमेव समर्थयन्ते। अस्माकमिति रामेण समर्धनेना दिव्य-पुरुषवचनं पक्षैक्याभिप्रायकम्। वस्तुतस्तु नोशब्दः पृथक्पदमित्याश्रित्य अत्र-निवसता देवेन दूषणखरत्रिमूर्धा हताः। नो किमिति काक्वा योजनीयम्। इयं च प्रत्यभिज्ञापनशैली गौरव्यविषयेष्वनुभवसिद्धा ॥ १५ ॥ **येनेति**।

रामः—न केवल दण्डकैव जनस्थानमपि ।

शम्बूकः—बाढम् । एतानि खलु सर्वभूतरोमहर्षणान्युन्मत्तचण्डश्वापदकुलसंकुलेगिरिगह्वराणि जनस्थानपर्यन्तदीर्घारण्यानि दक्षिणां दिशमभिवर्तन्ते । तथाहि—

निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरघोरभुजगश्वासप्रदीप्ताग्नयः ।
सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥ १६ ॥

रामः—

पश्यामि च जनस्थानं भूतपूर्वखरालयम् ।
प्रत्यक्षानिव वृत्तान्तान्पूर्वाननुभवामि च ॥ १७ ॥

( सर्वतोऽवलोक्य । ) प्रियारामा हि सर्वथा वैदेह्यासीत् । एतानि तानि नाम कान्ताराणि । किमतः परं भयानकं स्यात् । ( सास्रम् । )

त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु ।
इतीहारमतैवासौ स्नेहस्तस्याः स तादृशः ॥ १८ ॥

---

सिद्धक्षेत्रे सिद्धिप्रदपुण्यक्षेत्रे अकुतोभयः नास्ति कुतो भयं यस्येति विग्रहः ॥ **एतानीति** । रोमहर्षणानि रोमाञ्चजनकानि । **निष्कूजेति** । निर्गताः कूजाः कूजितानि येभ्य इति विग्रहः । कूजितशून्या इत्यर्थः । 'कूज अव्यक्ते शब्दे' इत्यस्मात् भावे घञ्प्रत्ययः । सत्त्वानां जन्तूनाम् । प्रदरोदराणि गुहामध्याः । प्रतिसूर्यकैः वक्रकृकलासकैः ॥ १६ ॥ **पश्यामीति** । भूतपूर्वो यः खरालयः तथाविधमित्यर्थः । भूतपूर्वः खरालयः खरगृहं यस्मिन्निति वा । प्रत्यक्षानिव पुरोवर्तमानानिव । अनुभवामि स्मृतिवैशद्येन प्रत्यक्षीकरोमि ॥ १७ ॥ कान्ताराणि दुर्गमवर्त्मानि । भयानकं भयजनकम् । **त्वयेति** । मधुगन्धः एषु अस्तीति मधुगन्धीनि तेषु वनेषु इह कान्तारेषु आरमते प्रीतिं प्राप्तवत्येव । कुत इत्यत आह—स्नेहस्तस्याः स तादृश इति । 'हृदयं त्वेव जानाति प्रीतियोगं परस्परम्' इत्युक्तरीत्या परिच्छेदातीत इत्यर्थः ॥ १८ ॥

न किंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ १९ ॥

शम्बूकः---तदलमेभिर्दुरासदैः । अथैतानि मदकलमयूरकण्ठकोमलच्छविभिरवकीर्णानि पर्यन्तैरविरलनिविष्टनीलबहलच्छायातरुणतरुषण्डमण्डितान्यसंभ्रान्तविविधमृगयूथानि पश्यतु महानुभावः प्रशान्तगम्भीराणि मध्यमारण्यकानि ।

इह समदशकुन्ताक्रान्तवानीरवीरुत्-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ २० ॥

अपि च ।

दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।

नेति । यस्य प्रियः प्रीतिमान् प्रीतिविषयो वा यः जनः किंचिदपि न कुर्वाणः सन् किंचित्कारलेशेनापि शून्यः सन् सौख्यैः स्वीयसुखैः करणैः दुःखान्यपोहति नाशयति । तत् दुःखनाशहेतुभूतो जनः । विधेयप्राधान्यान् नपुंसकत्वम् । तस्य अपोह्यमानदुःखवतः पुरुषस्य किमपि विलक्षणं द्रव्यं भव्यवस्तु । 'द्रव्यं च भव्ये' इत्यनुशासनम् । यद्वा सौख्यैरिति इत्थंभूतलक्षणे तृतीया । तथा च सौख्यैः विशिष्टः सुखितः प्रियः इष्टः यः जनः यस्य न किंचिदपि कुर्वाणः स्वरूपातिरेकिव्यापारलेशशून्यः सन् दुःखानि अपोहति तदित्यादि पूर्ववत् । दुःखनिवृत्तिहेतुव्यापारलेशशून्यः सन्नपि स्वीयसुखविशिष्टः यः स्वरूपेणैव यद्दुःखनिवृत्तिं प्रति कारणं तं प्रति तस्य निस्तुलभव्यद्रव्यत्वमिति भावः । एवं चाहं सीताविषये किंचित्कारलेशशून्योऽपि सुखितः सन् तद्दुःखनिवर्तक इति कान्तारगमनं युक्तमेवेति हृदयस्थितोऽर्थः ॥ १९ ॥ अथेति । पर्यन्तैः अभ्यर्णप्रदेशैः । छायाप्रधानाः तरवः छायातरवः । प्रशान्तानि अनुद्वेगजननानि । इहेति । शकुन्ताः पक्षिणः । वानीराः वेतसविशेषाः । मुखराणि शब्दवन्ति भूरीणि स्रोतांसि यासां ताः ॥ २० ॥ दधतीति । कुहरभाजां गुहावर्तिनां भल्लूकयूनां ऋक्षाणां अनुरसितेन अनुरणनेन-

शम्बूकः—यावत्पुराणब्रह्मवादिनमगस्त्यमृषिमभिवाद्य शाश्वतं पदमनुप्रविशामि। (इति निष्क्रान्तः।)

रामः—

एतत्तदेव हि वनं पुनरद्य दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः।
आरण्यकाश्च गृहिणश्च रताः स्वधर्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः॥ २२॥

एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि।
आमञ्जुवञ्जुललतानि च तान्यमूनि
नीरन्ध्रनीलनिचुलानि सरित्तटानि॥ २३॥

मेघमालेव यश्चायमारादपि विभाव्यते।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी॥ २४॥

अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु।
गोदावर्याः पयसि विततश्यामलानोकहश्री-
रन्तःकूजन्मुखरशकुनो यत्र रम्यो वनान्तः॥ २५॥

---

भजन्ति। निष्यन्दः स्वरसद्रवः। स्त्यायते वर्धते विसरति वा॥२१॥ देवयानाः देवयाननामकाः। ते च 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्' इत्युक्ताः। लोकेभ्यः लोकाननुभवितुम्॥ **एतदिति**। गृहिणः गृहमेधिनः। सांसारिकेषु जन्मफलभूतेषु॥ २२॥ **एत इति**। विरुवन्मयूराः कूजद्बर्हिणः॥ २३॥ **मेघमालेति**। मेघमालेव मेघमालासदृशः यः अयं पुरोवर्तिपदार्थः आरादिव समीपस्थ इव विभाव्यते ज्ञायते। यत्र गिरौ गोदावरी नदी स प्रस्रवणो गिरिः॥ २४॥ **अस्यैवेति**। मुखरशकुनः कूजत्पक्षियुक्तः अत एव अन्तः-

---

१ निष्पन्द. २ देवयानाः। प्रलीयस्व पुण्येषु लोकेषु. ३ प्रतिष्ठस्व. ४ पुराणब्रह्मर्षिमगस्त्यम्. ५ एतत्पुनर्वनमहो कथमद्य. ६ रुद्धानि. ७ नीप. ८ यः श्याम आरादपि. ९ सोयमत्र. १० विनत, विततानोकहश्यामल. ११ मधुर.

तदत्रैव सा पञ्चवटी यत्र चिरनिवासेन विविधविस्रम्भातिप्रसङ्गसाक्षिणः प्रदेशाः प्रियायाः प्रियसखी च वासन्ती नाम वनदेवता । किमिदमापतितमद्य रामस्य । संप्रति हि ।

चिराद्वेगारम्भी प्रसृत इव तीव्रो विषरसः
कुतश्चित्संवेगात्प्रचल इव शल्यस्य शकलः ।
व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुनः
घनीभूतः शोको विकलयति मां मूर्च्छयति च ॥ २६ ॥

तथापि तान्पूर्वसुहृदो भूमिभागान्पश्यामि । ( निरूप्य । ) अहो अनवस्थितो भूमिसंनिवेशः । तथाहि ।

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥ २७ ॥

---

कूजन् स्वयं कूजन्निव स्थितः ॥ २५ ॥ यत्रेति । विस्रम्भाः स्वैरविलासाः । चिरादिति । तीव्रः स्पर्शदशायामपि दुःसहः । अनेन अज्ञातस्पर्शविषविशेषव्यावृत्तिः । चिरात् भूयांसं कालं शमित्वा । वेगं वेदनाशैघ्र्यं आरम्भयति उत्पादयतीति वेगारम्भी । अनेन पूर्वोक्तविषविशेषव्यावृत्तिः । प्रसृतः यत्राङ्गुल्यादौ स्पर्शः ततोऽन्यत्र सर्वाङ्गेषु प्रसृतः दलनादिना दुःसहप्रसरणः यः विषरसस्तत्सदृश इत्यर्थः । रसशब्देन विशेषोत्कर्षो विवक्षितः । कुतश्चित् यस्मात् कस्माच्चित् संवेगात् संभ्रमादिजन्यात् निर्घातात् प्रचलः शल्यस्य बाणाग्रस्य शकलः खण्ड इव स्थितः । स हि मरणभयादनुद्धृत एव तिष्ठति । रूढाः प्रादुर्भूताः ग्रन्थयः उपव्रणाः यस्मात् स तथोक्तः । स्फुटितः दलितः हृन्मर्मणि व्रण इव हृदयमर्मवर्तिव्रणसदृशः । क्वाचित्कस्पर्शसार्वत्रिकप्रसरणाभ्यां प्रथमः दृष्टान्तः । प्रासिकार्थत्वशङ्काव्युदासाय द्वितीयः । स्वल्पकालत्वव्यावृत्तये तृतीयः । विशेषमाह—नूतन इवेति । विकलयति शून्यं करोति ॥ २६ ॥ अनवस्थितो भूतसंनिवेशः अनियता पदार्थस्थितिः । पुरेति । बहोः कालात् दृष्टं बहुकालमदृष्ट्वा दृष्टम् । ल्यब्लोपे पञ्चमी । यद्वा पूर्वदर्शनकालबहुविप्रकृष्टकाले दृष्टम् । 'सप्तमीपञ्चम्यौ' इति पञ्चमी । तदिदमिति बुद्धिं प्रत्यभिज्ञाम् । अत्र [illegible]

यत्संबन्धिकथाभिरेव सततं दीर्घाभिरास्थीयत।
एकः संप्रति नाशितप्रियतमस्तामद्य रामः कथं
पापः पञ्चवटीं विलोकयतु वा गच्छत्वसंभाव्य वा ॥ २८॥

शम्बूकः—जयतु जयतु देवः। देव भगवानगस्त्यो मत्तः श्रुत-भवत्संनिधानस्त्वामाह—'परिकल्पितविमानावतरणमङ्गला प्रतीक्षते

---

कुवलयानन्दकृत् ॥ २७ ॥ यस्यामिति। स्वे गृहे यथा यस्यां ते दिवसाः नीताः निरुपप्लवत्वरामणीयकादिभिः स्वगृहतुल्यायां यस्यां पञ्चवट्यां नीताः अतिवाहिताः। न केवलं रात्रयो नीताः किंतु दिवसा अपि नीता इति दिवस-पदेन व्यज्यते। तेन स्वगृहापेक्षया वैलक्षण्यमपि पञ्चवट्याः। तत्र हि–राज्य-तन्त्रादिना दिवसेषु न सहावस्थानं घटते। तया सह मयेति वान्वयः। स्वे गृहे गुरुसंनिधितिरोहितप्रणयपारतन्त्र्यासंकोचात् स्वगृहाद्विशेषः। यत्संबन्धकथाभिः। कत्रीभिः। आस्थीयत। तस्थेर्भावे लङ्। एवकारेण वाग्व्यापारान्तरप्रतिषेधः। य-त्कथाभिः इत्यनुक्त्वा यत्संबन्धकथाभिरित्युक्तेः पञ्चवटीपरिसरवर्तिनामपि राम-णीयकं व्यज्यते। अत्र 'स्मरन्कमलपत्राक्षीं रामः संध्यामुपागमत्' इत्युक्तरीत्या सर्वकालं बुद्धिस्थत्वात् तथेत्युक्तम्। तामेव न तु यां कांचिदित्यर्थः। वियोगे हि रमणीयवस्तुदर्शनमात्रं दुःसहम्, किं पुनः सहानुभूतरमणीयदर्शनं दुःसहमिति। एकः केवलः। सीताशून्य इति भावः। ननु राज्ञः शुद्धान्त एव स्थित्यर्हायाः कथं सहगमनं घटते। पुरं प्रति गमने तु सुलभमेव तद्दर्शनमिति किमिहात्याहितमिति अत्राह—नाशितप्रियतम इति। नाशितत्वमपि दैवाधीनं चेत् कथंचित् सह्यत एव न तु तथा। किंतु मदधीन एव नाश इति दुःखातिशयो व्यज्यते। ननु तर्हि यत्र सा तत्रैव गम्यतामित्यत्राह—पाप इति। मरणप्रतिबन्धकपापवा-नित्यर्थः। 'तथाप्येष प्राणः स्फुरति न तु पापो विरमति' इत्युक्तेः। असं-भाव्य असंमान्य रामः पञ्चवटीं विलोकयतु। वेत्यन्यादृशशैल्यात् सर्वथा न मत्स्वरूपं विलोकनमसंभाव्यगमनं वेति व्यज्यते। संप्रति नाशितप्रियतम इत्यनेन आर्द्रदुःखत्वं व्यज्यते। सर्वथा प्रियारामेत्यारभ्य एतच्छ्लोकपर्यन्त-मनुरागप्रकाशनविशिष्टवचनरूपं पुष्पं नाम संध्यङ्गमुक्तम् ॥ २८ ॥ भगवा-निति। मत्तः श्रुतं संनिधानं त्वत्सामीप्यं येन सः। मत्त इति रामागमन-ख्यातुः दिव्यपुरुषस्यागस्त्यं प्रति गुरुप्रायत्वं कवेरभिमतमिति व्यज्यते। 'आख्यातोपयोगे' इति पञ्चमीविधानात्। परिकल्पितेति। आवरणमङ्गलं

वत्सला लोपामुद्रा सर्वे च महर्षयः। तदाह संभावयास्मान्। अथ प्रजविना पुष्पकेण स्वदेशमुपगम्याश्वमेधाय सज्जो भविष्यसीति।

**रामः**—यथाज्ञापयति भगवान्।

**शम्बूकः**—इतस्तर्हि देवः प्रवर्तयतु पुष्पकम्।

**रामः**—( पुष्पकं प्रवर्तयन्।) भगवति पञ्चवटि गुरुजनोपरोधातिक्षणं क्षम्यतामयमतिक्रमो रामस्य।

**शम्बूकः**—देव पश्य पश्य।

कूजत्कुञ्जकुटीरकौशिकघटाघूत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः।
एतस्मिन्प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहिणतरुस्कन्धेषु कुम्भीनसाः॥ २९॥

अपि च।

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः क्षोणीभृतो दाक्षिणाः।

---

नीराजनादिकम्। लोपामुद्रा अगस्त्यपत्नी प्रतीक्षते कृतक्षणा तिष्ठति। त्यक्तसर्वव्यापारा तिष्ठतीत्यर्थः। अथ प्रजविना प्रकृष्टवेगवता। एकदेशिनेति ज्ञापनात् कर्मधारयादिनिः॥ प्रवर्तयन् गमयन्। गुरुजनस्य अगस्त्यस्य आदेशोपरोधादाज्ञानुसरणाद्धेतोः। अतिक्रमः असंभाव्यगमनरूपः। अत्रेष्टजनानुनयात् पर्युपासनं नाम संध्यङ्गमुक्तम्॥ **गुञ्जदिति।** कुञ्जा एव कुटीराः। गुञ्जन्तः अव्यक्तशब्दवन्तः कुञ्जकुटीराः येषां ते। कौशिकघटाः घूकपंक्तयः तासां घुत्काराः एषु सन्तीति तद्वन्तः कीचकाः तेषां रन्ध्रवतां वेणुविशेषाणां स्तम्बाः काण्डाः तेषामाडम्बरः संभ्रमः तेन मूकानि जोषमासीनानि मौकुलिकुलानि यस्य स तथोक्तः। क्रौञ्चाभिधोऽयं तन्नामकोयं गिरिः। प्रचलाकिनां मयूराणाम्। रोहिणतरवः हरिचन्दनवृक्षाः कुम्भीनसाः सर्पाः उद्वेल्लन्ति वेपन्ते। 'वेल्ल चलने' ॥ २९॥ **एत इति।** कुहरेषु गुहासु गद्गदं यथा तथा नदन्ति शब्दवन्ति गोदावरीवारीणि येषु तथोक्ताः। शिखराग्रं मौलिः। पर्वताग्रं शिखरमिति इह भेदः।

अन्योन्यप्रतिघातसंकुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्संगमाः ॥३०॥

( इति निष्क्रान्ताः सर्वे । )

पञ्चवटीप्रवेशो नाम द्वितीयोऽङ्कः ।

---

क्षोणीभृतः पर्वताः । दाक्षिणाः दक्षिणदिशावर्तिनः । एते ते पूर्वं भवता दृष्टाः । अन्योन्यप्रतिघातेन परस्परप्रत्यास्फालनेन संकुलाः निबिडाः चलन्तः कल्लोलाः तरङ्गाः तेषां कोलाहलैः कलकलैः उत्तालाः उल्बणाः सरित्संगमाः नदीसंगमाः ॥ ३० ॥

घासूलवंशजनुषो भूसारजवीरराघवार्यस्य ।
उत्तररामचरित्रव्याख्यायामवसितो द्वितीयोऽङ्कः ॥

इति श्रीघासूलवीरराघवविरचितायां भवभूतिभावतलस्पर्शिनीसमाख्यायामुत्तररामचरितव्याख्यायां द्वितीयोऽङ्कः ॥

( ततः प्रविशति नदीद्वयम् । )

एका—सखि मुरले किमसि संभ्रान्तेव ।

मुरला—सखि तमसे प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुम् । जानास्येव यथा वधूपरित्यागप्रभृति

अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।

पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥ १ ॥

तेन च तथाविधेष्टजनकष्टविनिपातजन्मना प्रकर्षगतेन दीर्घशोकसंतापेन संप्रत्यतितरां परिक्षीणो रामभद्रः । तमवलोक्य कम्पितमिव मे हृदयम् । अनुधा च प्रतिनिवर्तमानेन रामभद्रेण नियतमेव पञ्चवटीवने वधूसहवासविस्रम्भसाक्षिणः प्रदेशा द्रष्टव्याः । तेषु च निसर्गधीरस्याप्येवंविधायामवस्थायामतिगम्भीराभोगशोकक्षोभसंवेगात्पदे पदे महान्ति प्रमादस्थानानि शङ्कनीयानि रामभद्रस्य । तद्भगवति गोदावरि तत्र त्वया सावधानया भवितव्यम् ।

---

वधूपरित्यागात् स्नुषापरित्यागात् । **अनिर्भिन्न इति** । करुणो रसः इष्टजनवियोगजन्यदुःखातिशयात्मकरसः । पुटपाकप्रतीकाशः लोहादिमयसंपुटान्तर्वर्तिसंतापनसदृश इत्यर्थः ॥ १ ॥ **तेनेति** । तथाविधेष्टजनस्य सीतायाः कष्टविनिपातात् दुःखमयविक्षेपात् जन्म उत्पत्तिः यस्य तथोक्तेन । प्रकृष्टोऽधिकः गद्गदशब्दः येन तथोक्तेन । 'प्रकर्षगद्गदेन' इति पाठे प्रकर्षेण गद्गदो यस्मिन्निति विग्रहः । दीर्घशोकसंतानेन दीर्घदुःखपरिवाहेण परिक्षीणः कार्श्यदौर्बल्यादियुक्तः । कुसुमेन समं बन्धनं यस्येति विग्रहः । कुसुमसमबन्धनम् । तद्वत् सुच्छेदमित्यर्थः । **अधुनेति** । वधूसहनिवासे ये विस्रम्भाः स्वैरलीलाः तत्साक्षिणः तत् साक्षात्कर्तारः प्रदेशाः वनोद्देशा नियतमित्यसंदेहवाचि । **तत्रेति** । गम्भीरः आभोगः आयामः यस्य तथोक्तः यः शोकः तेन जातस्य क्षोभस्य प्रकृतिविपर्यासस्य संवेगात् वेगातिशयात् । महान् प्रमादः अनवधानता येषु तथोक्तानि । संज्ञाच्छेदकारीणीत्यर्थः । शोकस्थानानि

वीचीवातैः शीकरक्षोदशीतै-
राकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहे मोहे रामभद्रस्य जीवं
स्वैरं स्वैरं प्रेषितैस्तर्पयेति ॥ २ ॥

**तमसा**—उचितमेव दाक्षिण्यं स्नेहस्य। संजीवनोपायस्तु मौलिक इव रामभद्रस्याद्य संनिहितः ।

**मुरला**—कथमिव ।

**तमसा**—श्रूयताम् । पुरा किल वाल्मीकितपोवनोपकण्ठात्परित्यज्य निवृत्ते लक्ष्मणे सीतादेवी प्राप्तप्रसववेदनमतिदुःखसंवेगादात्मानं गङ्गाप्रवाहे निक्षिप्तवती । तदैव तत्र दारकद्वयं प्रसूता । भगवतीभ्यां पृथ्वीभागीरथीभ्यामभ्युपपन्ना रसातलं च नीता । स्तन्यत्यागात्परेण च दारकद्वयं तस्याः प्राचेतसस्य महर्षेर्गङ्गादेवी स्वयमर्पितवती ।

**मुरला**—( सविस्मयम् । )

ईदृशानां विपाकोऽपि जायते परमाद्भुतः ।
यत्रोपकरणीभावमायात्येवंविधो जनः ॥ ३ ॥

---

जगतां शोकनिमित्तानि । रामात्याहितानीति भावः । सावधानया अवधानं मनसो विषयान्तरसंचारविमुखता तत्सहितया ॥ **वीचीति**। शीकराणां सूक्ष्मांशैः पद्मकिञ्जल्कानामरविन्दकेसराणां गन्धान् सौरभ्याणि आकर्षद्भिः हरद्भिः । शीकरक्षोदेत्यनेन शैत्यमुक्तम् । पद्मकिञ्जल्कगन्धानित्यनेन सौरभ्यमुक्तम् । आकर्षद्भिरित्यनेन मान्द्यमुक्तम् । वहनाशक्तावेव कर्षणसंभवात् । स्वैरं निःशङ्कम् । अत्र स्वैरमित्युक्त्या सुरभिशीतलमृदुवाता अपि विरहिणामनर्थकारिण इति न शङ्क्यम् । विरहिणां चैतन्यदशायामेव दुःसहा इमे । मूर्च्छितानां तु प्राणप्रतिष्ठापनकरा एव । नातस्त्वयातिशङ्का कर्तव्येति व्यज्यते ॥ २ ॥ **उचितमिति** । दाक्षिण्यं सामर्थ्यं, ऊहापोहात्मकज्ञानवत्त्वं वा । मूलतः । सीताङ्कुरात् मूलमिति सीतोच्यते । मौलिक इति पाठेऽप्यर्थः प्रागिव ॥ **वाल्मीकीति** । प्राप्तप्रसववेदनं जातप्रसवदुःखम् । आत्मानं स्वम् । दारकद्वयं शिशुद्वयम् । अभ्युपपन्ना संगता । स्तन्यत्यागात्परेण स्तन्यत्यागानन्तरम् । ईदृशानामिति । विपाकः दशा । उपकरणीभावमुपकरणत्वम् । ३ ।

**तमसा**——इदानीं तु शम्बूकवृत्तान्तेनानेन संभावितजनस्थानागमनं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी यदेव भगवत्या लोपामुद्रया स्नेहादाशङ्कितं तदेवाशङ्क्य सीतासमेता केनचिदिव गृहाचारव्यपदेशेन गोदावरीं विलोकयितुमागता ।

**मुरला**——सुचिन्तितं भगवत्या भागीरथ्या राजधानीस्थितस्यास्य खलु तैस्तैर्जगतामाभ्युदयिकैः कार्यैर्व्यापृतस्य रामभद्रस्य नियताश्चित्तविक्षेपाः । अव्यग्रस्य पुनरस्य शोकमात्रद्वितीयस्य पञ्चवटीप्रवेशो महाननर्थ इति । तत्कथमिदानीं सीतादेव्या रामभद्र आश्वासनीयः स्यात् ।

**तमसा**——उक्तमत्र भगवत्या भागीरथ्या 'वत्से देवयजनसंभवे सीते अद्य खल्वायुष्मतोः कुशलवयोर्द्वादशस्य जन्मसंवत्सरस्य संख्यामङ्गलग्रन्थिरभिवर्तते । तदात्मनः पुराणश्वशुरमेतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व । न च त्वामवनिपृष्ठचारिणीमस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति किंपुनर्मर्त्याः' इति । अहमप्याज्ञापिता तमसे त्वयि प्रकृष्टप्रेमैव वधूर्जानकी । अतस्त्वमेवास्याः प्रत्यनन्तरीभव इति । साहमधुना यथादिष्टमनुतिष्ठामि ।

---

**इदानींमिति** । उपश्रुत्याकर्ण्य । तत् सर्वं श्रूयतामित्यारभ्य ऋषिश्रेयोवितरणरूपबीजस्य अन्वेषणाद्गर्भसंधिरयम् । 'गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः' इत्युक्तेः । केनचिदिव गृहाचारव्यपदेशेनेत्यत्र प्रस्तुतोपयोगिच्छद्माचरणरूपं अभूताहरणं नाम संध्यङ्गमुक्तम् । **सुष्ठु इति** । राजनीतिस्थितस्य क्षत्रियोचितराज्यपरिपालनात्मकधर्मनिष्ठस्य । अभ्युदयाय भवन्तीत्याभ्युदयिकानि इति विग्रहः । तैः आभ्युदयिकैः । चित्तविक्षेपाः हृदयतोदाः । अव्यग्रस्य व्यापारान्तरशून्यस्य । अनर्थः तद्दुःखहेतुः । एष तत्त्वार्थानुकीर्तनरूपो मार्ग उक्तः ॥ द्वादशस्य जन्मवत्सरस्य संख्यामङ्गलग्रन्थिरभिवर्तते संख्यापूर्तिहेतुकमङ्गलग्रन्थिः । वत्सरे वत्सरे शिशूनां जन्मनक्षत्रे शान्त्युत्सवं कृत्वा मङ्गलार्थं करे पटसूत्रादिना स्त्रियो ग्रन्थिं कुर्वन्ति । स तु करे वलयरूपेण तिष्ठतीत्युपदेशः । मानवस्य

**तमसा**—तदिय गोदावरीह्रदान्निष्क्रम्य

परिपाण्डुदुर्बलकपोलसुन्दरं
दधती विलोलकबरीकमाननम् ।
करुणस्य मूर्तिरथवा शरीरिणी
विरहव्यथेव वनमेति जानकी ॥ ४ ॥

**मुरला**—इयं हि सा ।

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ ५ ॥

( इति परिक्रम्य निष्क्रान्ते । )

शुद्धविष्कम्भः ।

---

दिदोषगन्धम् । देवं जगत्सृष्ट्यादिलीलाशालिनम् । अत्र 'एष सर्वेभ्यः पाप्मभ्य उदेति' इत्यन्तरादित्यविद्याप्रत्यभिज्ञापिता । तत्र च कप्यासश्रुत्या नारायण एव प्रतिपाद्य इति स्पष्टमेव । उपतिष्ठस्व सेवस्व । **अत इति** । प्रत्यनन्तरीभव अनुचरीभव ॥ **रामभद्र इति** । तर्कयामि अनुमिनोमि ॥ **परिपाण्डु इति** । करुणस्य इष्टवियोगजन्यदुःखातिशयस्य मूर्तिः आकारो वा । विरहव्यथा । विरहजन्यसंतापादिरूपा ॥ ४ ॥ **किसलयमिति** । परिपाण्डु उत्कर्षीया अतिम्लानत्वेऽपि लावण्याविरोधिपाण्डुतोक्ता । ग्रीष्मविरहतापयोरयमेव विशेषः । यत् ग्रीष्मस्य लावण्यनाशकत्वं विरहस्य तु तदभाव इति । तथा च कालिदासः—'समस्तापः कामं मनसिजनिदाघप्रसरयोर्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु' इति । एवं सुभगं न । एवं लावण्यापरित्यागेन रमणीयं न भवतीत्यर्थः । तथाह भगवान् वाल्मीकिः—'ज्योत्स्ना तुषारमलिना पौर्णमास्यां हि लक्ष्मण । सीतेव चातपश्यामा दृश्यते न च शोभते ॥' इति । ग्रीष्मस्यातपश्यामेति लावण्यनाशकत्वम् । क्षामं कृशं ग्लपयति म्लानं करोति । शरदिजः शरत्कालजः । 'प्रावृट् शरत्' इत्यादिसूत्रेणालुक् । अत्र लिङ्गादभ्यूहनरूपं अनुमानं नाम संध्यङ्गमुक्तम् ॥ ५ ॥ **शुद्धविष्कम्भ इति**। संस्कृतात्मकविष्कम्भ इत्यर्थः । विष्कम्भस्वरूपं तु—'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥' इति ।

सीता—अम्हहे जाणामि पिअसही मे वासन्दी वाहरदि त्ति। (क)

( पुनर्नेपथ्ये । )

सीतादेव्या स्वकरकलितैः सल्लकीपल्लवाग्रै-
रग्रे लोलः करिकलभको यः पुरा वर्धितोऽभूत् ।

सीता—किं तस्स । (ख)

( पुनर्नेपथ्ये । )

वध्वा सार्धं पयसि विहरन्सोऽयमन्येन दर्पा-
दुद्दामेन द्विरदपतिना संनिपत्याभियुक्तः ॥ ६ ॥

सीता—( ससंभ्रमम् । कतिचित्पदानि गत्वा । ) अज्जउत्त परित्ताहि परित्ताहि मह तं पुत्तअम् । ( स्मृतिमभिनीय सवैक्लव्यम् । ) हद्धी हद्धी। ताइं ज्जेव्व चिरपरिचिदाइं अक्खराइं पञ्चवटीदंसणेण मं मन्दभाइणिं अणुबन्धन्ति । हा अज्जउत्त । ( इति मूर्च्छति । ) (ग)

( प्रविश्य । )

तमसा—वत्से समाश्वसिहि । समाश्वसिहि ।

( नेपथ्ये । )

विमानराज अत्रैव स्थीयताम् ।

---

(क) अह्महे जानामि प्रियसखी मे वासन्ती व्याहरतीति ।

(ख) किं तस्य ।

(ग) आर्यपुत्र परित्रायस्व परित्रायस्व मम तं पुत्रकम् । हा धिक् हा धिक् । तान्येव चिरपरिचितान्यक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनीमनुबध्नन्ति । हा आर्यपुत्र ।

---

केवलसंस्कृतप्रायः शुद्ध इति ॥ व्याहरति वदति ॥ **सीतेति** । स्वकरकलितैः स्वकराभ्यां दत्तैरित्यर्थः । वध्वा सार्धं स्त्रिया सह । उद्दामेन उत्कटेन संनिपत्य स्वयमापत्य । अभियुक्तः प्रत्यार्थितया संगतः ॥ ६ ॥ **आर्यपुत्रेति** । परित्रायस्वेति । एष ह्यपकारिजनात् भीतिरूप उद्वेग उक्तः । **तानीति** ।

---

१ जात जात २ व्यग्रहस्ता. ३ वेगात्. ४ दधती. ५ विचिन्त्य. ६ णोण पुणोवि मं ( पुनरपि मां ), ७ अणुरुन्धन्ति.

[illegible] अम्हहे जलभरभरिअमे-
हमन्थरत्थणिअगम्भीरमंसलो कुदो णु एसो भारईणिग्घोसो भरन्त-कण्णविवरं मं वि मन्दभाइणिं झत्ति उस्सुआवेदि। (क)

**तमसा**—( सस्नेहास्रम् । ) अयि वत्से

> **अपरिस्फुटनिक्वाणे कुतस्त्येऽपि त्वमीदृशी ।**
> **स्तनयित्नोर्मयूरीव चकितोत्कण्ठितं स्थिता ॥ ७ ॥**

**सीता**—भअवदि किं भणासि अपरिप्फुडेत्ति। मए उण सरसंजोएण पच्चभिआणिदं अज्जउत्तो एव्व वाहरदित्ति। (ख)

**तमसा**—श्रूयते तपस्यतः किल शूद्रस्य दण्डधारणार्थमैक्ष्वाको राजा जनस्थानमागत इति।

**सीता**—दिट्ठिआ अपरिहीणराअधम्मो क्खु सो राआ। (ग)

( नेपथ्ये । )

> **यत्र द्रुमा अपि मृगा अपि बन्धवो मे**
> **यानि प्रियासहचरश्चिरमध्यवात्सम् ।**

---

(क) अहाहे जलभरभरितमेघमन्थरस्तनितगम्भीरमांसलः कुतो न्वेष भारतीनिर्घोषो भ्रियमाणकर्णविवरां मामपि मन्दभागिनीं झटित्युत्सुकयति।

(ख) भगवति किं भणस्यपरिस्फुटेति । मया पुनः स्वरसंयोगेन प्रत्यभिज्ञातमार्यपुत्र एव व्याहरतीति ।

(ग) दिष्ट्या अपरिहीनराजधर्मः खलु स राजा।

---

अक्षराणि आर्यपुत्रेति वर्णाः । अनुबध्नन्ति अनुसरन्ति । मन्दभागिनीमल्पपुण्यफलाम् ॥ **जलेति** । मांसलः स्फीतः । भारतीनिर्घोषः वर्णोच्चारणध्वनिः । उत्सुकापयति उत्कण्ठितां करोति ॥ स्वरसंयोगेन स्वरसंदर्भेण प्रत्यभिजानामि तदिदमिति वेद्मि ॥ **श्रूयत इति** । तपस्यतः तपश्चरतः । कण्ड्वादिरयम् । दण्डधारणार्थम् अपराधानुगुणशिक्षणार्थम् । ऐक्ष्वाकः इक्ष्वाकुवंश्यः । 'दाण्डिनायन'—इत्यादिसूत्रेण टिलोपः ॥ अपरिहीनधर्मः अन्यूनधर्मः ॥ **यत्रेति** । अध्यवात्सम् उषितवानस्मि । 'उपान्वध्याङ्वसः' इति कर्मत्वम् । एतानीति ।

---

१ ससाध्वसोत्कंपो॰. २ जलभरिदमेहत्थणिद. ३ उस्सुआविइ ( उत्सुकापयति ).

दुब्बलेन आआरेण अअं णिअसोम्मगम्भीराणुभावमेत्तपच्चहिजाणिज्जो उज्जउत्तो एव्व । भअवदि तमसे धारेहि मम् । (इति तमसामाश्लिष्य मूर्च्छति ।) (क)

तमसा—वत्से समाश्वसिहि समाश्वसिहि ।

(नेपथ्ये ।)

अनेन पञ्चवटीदर्शनेन

अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः ।
उत्पीड इव धूमस्य मोहः प्रागावृणोति माम् ॥ ९ ॥

हा प्रिये जानकि ।

तमसा—(स्वगतम् ।) इदं तदाशङ्कितं गुरुजनेन ।

सीता—(समाश्वस्य ।) हा कहं एदम् । (ख)

(पुनर्नेपथ्ये ।)

हा देवि दण्डकारण्यवासप्रियसखि विदेहराजपुत्रि । (इति मूर्च्छति ।)

सीता—हद्धी हद्धी । मं मन्दभाइणिं वाहरिअ आमीलंतणेत्त-

(क) हा कथं प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामदुर्बलेनाकारेणायं निजसौम्यगम्भीरानुभावमात्रप्रत्यभिज्ञेय आर्यपुत्र एव । भगवति तमसे धारय माम् ।

(ख) हा कथमेतत् ।

गोदावरीपरिसरस्य गोदावरीसमीपवर्तिनः ॥ ८ ॥ परिक्षामदुर्बलेन दुर्बलायमानेन । पाठान्तरम् 'परिक्षामधूसरेण' इति । अतिकृशेन दुर्बलेन चेत्यर्थः ॥ अनुभावमात्रप्रत्यभिज्ञेयः प्रभावेन केवलं प्रत्यभिज्ञातुं शक्यः ॥ अन्तर्लीनस्येति । अन्तर्लीनस्य अन्तर्गूढस्य । उद्दामं उल्बणं यथा तथा अद्य ज्वलिष्यतः एतदव्यवहितोत्तरक्षणभाविज्वलनवतः धूमस्य उत्पीड इव धूमसंबन्धिसंघात इव संमर्द इवेति वा । मोहः मूर्च्छा प्राक् ज्वलनात् पूर्वम् । आवृणोति संछादयति ॥ ९ ॥ इदमिति । गुरुजनेन । लोपामुद्राप्रभृतिनेत्यर्थः । एष संचितार्थप्राप्तिरुपक्रम उक्तः ॥ हेति । धरणीपृष्ठे भूतले

१ अअं सो. २ पच्चभिआणिदो अज्जउत्तो एव्व ता मं धारेहि (प्रत्यभिज्ञात आ० एव तन्मां धारय). ३ उहिसिअ. ४ आमीलिद.

विपल्हत्थो। भअवदि तमसे परित्ताधहि परित्ताएहि। जीवावेहि अज्जउत्तम्। (इति पादयोः पतति।) (क)

**तमसा**—

त्वमेव ननु कल्याणि संजीवय जगत्पतिम्।
प्रियस्पर्शो हि पाणिस्ते तत्रैष निरतो जनः ॥ १० ॥

**सीता** जं होदु तं होदु। जह भअवई आणवेइ। (इति ससंभ्रमं निष्क्रान्ता।) (ख)

(ततः प्रविशति भूम्यां निपतितः सास्रया सीतया स्पृश्यमानः साह्लादोच्छ्वासो रामः।)

**सीता**—(किंचित्सहर्षम्।) जाणे उण पच्चाअदं विअ जीविअं तेलोक्कस्स। (ग)

**रामः**—हन्त भोः किमेतत्।

---

(क) हा धिक् हा धिक्। मां मन्दभागिनीं व्याहृत्यामीलन्नेत्रनीलोत्पलो मूर्च्छित एव। हा कथं धरणिपृष्ठे निरुद्धनिःश्वासनिःसहं विपर्यस्तः। भगवति तमसे परित्रायस्व। जीवयार्यपुत्रम्।

(ख) यद्भवतु तद्भवतु। यथा भगवत्याज्ञापयति।

(ग) जाने पुनः प्रत्यागतमिव जीवितं त्रैलोक्यस्य।

---

निरुद्धनिःश्वासनिःसहं निरुद्धः प्रवृत्तिहीनः निःश्वासः यस्मिन् कर्मणि तद्यथा भवति तथा निःसहं दुर्बलं विपर्यस्तः॥ **त्वमेवेति**। त्वमेव ननु कल्याणीत्यस्यायं भावः। त्वयैवायं संजीवनीयः इति चिरंतनी प्रसिद्धिः। 'आनीतवातं स्वधया तदेकम्' इति श्रुत्यायमर्थोऽवगम्यते। एकं जगतां प्रलीनत्वादसहायमतो निर्व्यापारम्। तत् परं ब्रह्म स्वधात्वं सिद्धिस्त्वम्, स्वधा स्वाहा इति स्वधाशब्दवाच्यया लक्ष्म्या आनीतजीवम् इति। एवं च अद्य कथमहं वैदेशिकी जीवयामि त्वमेव जीवयेति। अत्र मां मन्दभागिनीमित्यारभ्य परित्रायस्वेत्यन्तसंदर्भेण शंकात्रासरूपसंभ्रम उक्तः॥ १०॥ आह्लादः आनंदः, उच्छ्वासः श्वासंचारः, ताभ्यां सहितं यथा तथा॥ **जाने इति**। प्रत्यागतं पुनरागतम्। त्रयाणामपि लोकानां राममयजीवितत्वात् रामजीवने तज्जीवनमिति भावः। तदुक्तम्—'रामो रामो राम इति प्रजानामभवन्कथाः। राम-

आश्च्योतनं नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजो नु सेकः।
आतप्तजीवितपुनःपरितर्पणोऽयं
संजीवनौषधिरसो नु हृदि प्रसिक्तः ॥ ११ ॥

च।

स्पर्शः पुरा परिचितो नियतं स एव
संजीवनश्च मनसः परिमोहनश्च।
संतापजां सपदि यः परिहृत्य मूर्च्छा-
मानन्दनेन जडतां पुनरातनोति ॥ १२ ॥

सीता—( ससाध्वसोत्कम्पमपसृत्य । ) एत्तिअं एव्व दाणिं मे ब-
हुम्। (क)

रामः—( उपविश्य । ) न खलु वत्सलया सीतादेव्याभ्युपपन्नोऽस्मि।

सीता—हद्धी हद्धी। किंति मं अज्जउत्तो मग्गिस्सदि। (ख)

रामः—भवतु। पश्यामि।

सीता—भअवदि तमसे ओसरह्म दाव। मं पेक्खिअ अणब्भणु-
ण्णादेण संणिहाणेण राआ अहिअं कुप्पिस्सदि। (ग)

---

( क ) एतावदेवेदानीं मे बहुतरम्।
( ख ) हा धिक् हा धिक्। किमिति मामार्यपुत्रो मार्गिष्यति।
( ग ) भगवति तमसे अपसरावस्तावत्। मां प्रेक्ष्यानभ्यनुज्ञातेन संनिधानेन
अधिकं कोपिष्यति।

---

जगद्भूद्रामे राज्यं प्रशासति ॥' इति । आश्च्योतनमिति। हरिच-
न्दनपल्लवानां आश्च्योतनं नु कल्पतरुकिसलयरसक्षरणाद्द्रवीकरणं किम्। कन्द-
लः अङ्कुरजः ॥ ११ ॥ स्पर्श इति। संजीवनश्च प्राणधारणहेतुभूतश्च
तोषणस्य आह्लादजनकश्च। मूर्च्छां प्रज्ञाशून्यतां आनन्देन जडतां आनन्दा-
तिशयप्रयुक्तप्रज्ञाशून्यतामातनोति आ समन्तात् विस्तारयति ॥ १२ ॥
तावदेव मत्स्पर्शो पुरा परिचितत्वकथनमेव। इदानीं वियोगसमये ॥ वत्सलया
वत्सलया मदीयदोषं सहमानया वा। अभ्युपपन्नोऽस्मि अनुगृहीतोऽस्मि।
इष्टजनातिसंधानात्मकमतिबलं नाम संध्यङ्गमुक्तम् ॥ अनभ्यनुज्ञातेन अन-

---

१ एषो. २ यो. जीवित-जीवन-मनः. ३ परितोषणः. ४ ससाध्वसकरुणम्.

तमसा—आयें वत्से भागीरथीप्रसादाद्वनदेवतानामप्यदृश्यासि संवृत्ता।

सीता—आम्, अत्थि खु एदम्। (क)

रामः—हा प्रिये जानकि।

सीता—( समन्युगद्गदम्। ) अज्जउत्त असरिसं क्खु एदं वअणं इमस्स वुत्तन्दस्स। ( सास्रम्। ) अहवा किंत्ति वज्जमई जम्मन्तरेसु वि पुणो असंभाविअदुल्लहदंसणस्स मं एव्व मन्दभाइणिं उद्दिसिअ वच्छलस्स एव्वंवादिणो अज्जउत्तस्स उवरि णिरणुक्कोसा भविस्सम्। अहं एदस्स हिअअं जाणामि ममावि एसो। (ख)

रामः—( सर्वतोऽवलोक्य सनिर्वेदम्। ) हा न किंचिदत्र।

सीता—भअवदि तमसे तहा णिक्कारणपरिच्चाइणो वि एदस्स एव्वंविधेण दंसणेण कीदिसो विअ मे हिअआणुबन्धोत्ति ण आणामि। (ग)

तमसा—जानामि वत्से जानामि।

---

( क ) आम्, अस्ति खल्वेतत्।

( ख ) आर्यपुत्र असदृशं खल्वेतद्वचनमस्य वृत्तान्तस्य। अथवा किमिति वज्रमयी जन्मान्तरेष्वपि पुनरसंभावितदुर्लभदर्शनस्य मामेव मन्दभागिनीमुद्दिश्य वत्सलस्यैवंवादिन आर्यपुत्रस्योपरि निरनुक्रोशा भविष्यामि। अहमेतस्य हृदयं जानामि ममाप्येषः।

( ग ) भगवति तमसे तथा निष्कारणपरित्यागिनोऽप्येतस्यैवंविधेन दर्शनेन कीदृश इव मे हृदयानुबन्ध इति न जानामि।

---

जृम्भतेन। संनिधानेन समीपस्थित्या॥ आर्यपुत्रेति। एतत् प्रियेत्यामन्त्रणम्। अस्य वृत्तान्तस्य। परित्यागरूपस्येत्यर्थः। वज्रमयी अत्यन्तकाठिन्ययुक्ता। मन्दभाग्यां मामुद्दिश्य वत्सलस्य निर्दोषत्वनिश्चयपूर्वकं मयि प्रीतिमतः निरनुक्रोशा निर्दया। अनुक्रोशपदेन रामदशामिमां दृष्ट्वा मुक्तकण्ठं मया रोदितव्यम्। तत् किमेवं कठिना भवामीति व्यज्यते। 'अनुक्रोशति मुक्तकण्ठं रोदित्यनेनेति अनुक्रोशः' इत्यमरव्याख्या॥ कीदृशी मे हृदयावस्था। आर्यपुत्र परित्रायस्व मम पुत्रकमित्यारभ्य ममाप्येष इत्यन्तेन संदर्भेण प्रतिपादि। मम हृद वस्थ

तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-
द्वियोगे दीर्घेऽस्मिञ्झटितिघटनात्स्तम्भितमिव।
प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन्क्षण इव ॥ १३ ॥

रामः—देवि

प्रसाद इव मूर्तस्ते स्पर्शः स्नेहार्द्रशीतलः।
अद्याप्यानन्दयति मां त्वं पुनः क्वासि नन्दिनि ॥ १४ ॥

सीता—एदे क्खु ते अगाधदंसिदसिणेहसंभारा आणन्दणिस्सन्दिणो सुहामआ अज्जउत्तस्स उल्लावा। जाणं पच्चएण णिक्कालणपरिच्चाअसल्लिदो वि बहुमदो मह जम्मलाहो। (क)

---

(क) एते खलु तेऽगाधदर्शितस्नेहसंभारा आनन्दनिष्यन्दिनः सुधामया आर्यपुत्रस्योल्लापाः। येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मम जन्मलाभः।

---

कीदृशीत्यर्थः ॥ तटस्थमिति। तव हृदयमस्मिन् क्षणे नैराश्यात् तटस्थमित्येत्यादिविभिन्नवाक्यतया योजना। नैराश्यात् प्रत्याशाभावात् तटस्थं प्रसादकालुष्यादिरहितम्। विप्रियवशात् कलुषं परित्यागरूपादप्रियाद्धेतोः कलुषं क्रोधयुक्तम्। दीर्घे अस्मिन् वियोगे आमरणान्तभावित्वेन ज्ञातेऽस्मिन् विरहे झटितिघटनात् आकस्मिकसंघटनात् स्तम्भितमिव विस्मयस्तिमितमिव सौजन्यात् प्रकृत्या कल्याणत्वात् प्रसन्नं भविष्यतानुसंधानेन निवृत्तकालुष्यम्। दयितकरुणैः रामस्य दुःखात्मकावस्थाविशेषैः गाढकरुणं परदुःखदुःखित्वरूपकरुणासान्द्रम्। प्रेम्णा प्रणयेन द्रवीभूतं विलीनम्। अत्र तटस्थं नैराश्यादित्यनेन तान्येव चिरपरिचितान्यक्षराणीति वाक्याभिमता सीतावस्था प्रतिपादिता। अपि च कलुषं विप्रियवशादित्यनेन असदृशं खल्वमुष्य वृत्तान्तस्येत्येतद्वाक्याभिमतावस्था प्रतिपादिता। वियोगे दीर्घेऽस्मिन्नित्यनेन कथं प्रभातचन्द्रमण्डलेत्यादिविवक्षितावस्था प्रतिपादिता। कथमित्यस्य विस्मयार्थकत्वात्। प्रसन्नं सौजन्यादित्यनेन अथ वा किमिति वज्रमयीवेत्यादिप्रतिपादितावस्था दर्शिता। दयितकरुणैर्गाढकरुणमित्यनेन हा धिक् इदं मां मन्दभागिनीं व्याहृत्येत्यादिवाक्यविवक्षितावस्था प्रतिपादिता। द्रवीभूतं प्रेम्णेत्यनेन उत्सुकयति उत्कण्ठितं स्थितमित्यादिवाक्यप्रतिपादितावस्थोक्ता ॥ १३ ॥ प्रसाद इति। स्नेहार्द्रशीतलः स्नेहार्द्रश्चासौ शीतलश्चेति विग्रहः। स्नेहहेतुकत्वात् स्नेहार्द्रत्वम्

अहो महान्प्रमादः प्रमादः । ( [illegible]
पठ्यते । )

**रामः**—( सकरुणौत्सुक्यम् । ) किं तस्य ।

( पुनर्नेपथ्ये । )

( 'वध्वा सार्धं' इत्युत्तरार्धं पठ्यते । )

**सीता**—को दाणिं अहिउज्जिस्सेदि । (क)

**रामः**—क्वासौ क्वासौ दुरात्मा यः प्रियायाः पुत्रकं वधूद्वितीयमभिभवति । ( इत्युत्तिष्ठति । )

( प्रविश्य संभ्रान्ता । )

**वासन्ती**—कथं देवो रघुनन्दनः ।

**सीता**—कहं पिअसही मे वासन्ती । (ख)

**वासन्ती**—जयतु जयतु देवः ।

**रामः**—( निरूप्य । ) कथं देव्याः प्रियसखी वासन्ती ।

**वासन्ती**—देव त्वर्यतां त्वर्यताम् । इतो जटायुशिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य संभावयतु देव्याः पुत्रकं देवः ।

**सीता**—हा ताद जडाओ सुण्णं तुए विणा इदं जणट्ठाणम् । (ग)

**रामः**—अहह हृदयमर्मच्छिदः खल्वमी कथोद्धाताः ।

**वासन्ती**—इत इतो देवः ।

---

( **क** ) क इदानीमभियोक्ष्यते ।

( **ख** ) कथं प्रियसखी मे वासन्ती ।

( **ग** ) हा तात जटायो शून्यं त्वया विनेदं जनस्थानम् ।

---

'तम्' इति सूत्रेणेतच् ॥ **नूनमिति** । संकल्पाभ्यासस्य स्मृतिसंतानस्य पाटवं स्फूर्तिः तदेव उपादानं कारणं यस्य तथोक्तः भ्रमः । सीता पृष्ठवर्तीत्याकारकान्यथाज्ञानम् ॥ **अहहेति** । हृदयमर्माणि छिन्दन्तीति विग्रहः । कथोद्धाताः

---

१ वोत्पादितः. २ अभिजुज्जाइ ( अभियुज्यते ). ३ ०शिखरिदक्षिणेन, जटायुगिरिशिखरस्य हस्तं हस्त-दक्षिणेन. ४ अज्ज ( अद्य ) सुण्णं.

देव्यास्तत्किमित्याशङ्कसे ।

**सीता**—तदो अणुसरह्म । ( इति परिक्रामति । ) (ख)

**रामः**—भगवति गोदावरि नमस्ते ।

**वासन्ती**—( निरूप्य । ) देव मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्रकेण ।

**रामः**—विजयतामायुष्मान् ।

**सीता**—अह्महे ईदिसो मे पुत्तओ संवुत्तो । (ग)

**रामः**—हा देवि दिष्ट्या वर्धसे ।

**येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण**
**व्याकृष्टस्ते सुतनु लवलीपल्लवः कर्णमूलात् ।**
**सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता**
**यत्कल्याणं वयसि तरुणे भाजनं तस्य जातः ॥ १५ ॥**

**सीता**—अविउत्तो दाणिं अअं दीहाऊ इमाए सोह्मदंसणाए होदु । ( घ )

**रामः**—सखि वासन्ति पश्य पश्य कान्तानुवृत्तिचातुर्यमपि शिक्षितं वत्सेन ।

**लीलोत्खातमृणालकाण्डकवलच्छेदेषु संपादिताः**
**पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।**

---

( क ) भगवति सत्यमेव वनदेवता अपि मां न प्रेक्षन्ते ।

( ख ) ततोऽनुसरावः ।

(ग) अहो ईदृशो मे पुत्रकः संवृत्तः ।

(घ) अवियुक्त इदानीमयं दीर्घायुरनया सौम्यदर्शनया भवतु ।

---

पुरावृत्तोपन्यासाः ॥ **अयीति** । प्रकृष्टमुत्कृष्टम् । अत्र प्रस्तुतोत्कर्षाभिधानरूपोदाहृतिरुक्ता ॥ **येनेति** । तरुणे वयसि यत् कल्याणं अङ्गनापरिष्वङ्गरूपं मङ्गलं तस्य भाजनं पात्रं जातः ॥ १५ ॥ **लीलेति** । लीलया उत्खाता उद्धृता मृणालकाण्डा एव कवला ग्रासाः तेषां छेदेषु अवसानेषु । पुष्यद्भिः

वत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥ १६ ॥

**सीता**—भअवदि तमसे अयं दाव ईरिसो जादो । दे उण ण आणामि कुसलवा एत्तिएण कालेण कीरिसा संवुत्तोत्ति । (क)

**तमसा**—यादृशोऽयं तादृशौ तावपि ।

**सीता**—ईदिसी अहं मन्दभाइणी जाए ण केवलं णिरन्तरं अज्जउत्तविरहो वि । (ख)

**तमसा**—भवितव्यतेयमीदृशी ।

**सीता**—किंवा मए पसूदाए जेण तादिसंपि मह पुत्तआणं ईसिविरलकोमलधवलदसणुज्जलकपोलं अणुबद्धमुद्धकाअलीविहासिदं णिबद्धकाकसिहण्डअं अमलमुहपुण्डरीअजुअलं ण परिचुम्बिअं अज्जउत्तेण । (ग)

**तमसा**—अस्तु देवताप्रसादात् ।

**सीता**—भअवदि तमसे एदिणा अवच्चसंसुमरणेण उस्ससिदप-

(क) भगवति तमसे अयं तावदीदृशो जातः । तौ पुनर्न जानामि कुशलवावेतावता कालेन कीदृशौ संवृत्ताविति ।

(ख) ईदृश्यहं मन्दभागिनी यस्या न केवलं निरंतरमार्यपुत्रविरहः पुत्रविरहोऽपि ।

(ग) किंवा मया प्रसूतया येन तादृशमपि मम पुत्रकयोरीषद्विरलधवलकोमलदशनोज्ज्वलकपोलमनुबद्धमुग्धकाकलीविहसितं निबद्धकाकशिखण्डकममलमुखपुण्डरीकयुगलं न परिचुम्बितमार्यपुत्रेण ।

वर्धमानैः पुष्करैः पद्मैः वासितस्य सुरभितस्य पयसः जलस्य गण्डूषसंक्रान्तयः पयःसंबन्धिगण्डूषसंक्रमणानि संपादिताः विर्व्यूढाः । अथवा पुष्यति उपचयवति पुष्करे शुण्डाग्रे वासितस्य संजातवासस्य पयसः जलस्य गण्डूषसंक्रान्तयः । लीलोत्खातमृणालकाण्डरूपकवलच्छेदेषु कवलार्धखण्डेषु । अधिकरणे सप्तमी । संपादिताः निर्व्यूढाः । तत्र हि 'अच्छिद्राणि भूयांसि' इति भावः । अनरालं अवक्रम् ॥ १६ ॥ अनुबद्धमुग्धकाकलीविहसितमुत्पन्नसूक्ष्ममधुरास्फुटध्वनिमु-

ण्हुदरथणी तादेअ पिदुणो सण्णिहाणेण खणमेत्तं संसारिणोम्हि संवु-
त्ता। (क)

**तमसा**—किमत्रोच्यते। प्रसवः खलु प्रकर्षपर्यन्तः स्नेहस्य। परं चैतदन्योन्यसंश्लेषणं पित्रोः।

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥ १७ ॥

**वासन्ती**—इतोऽपि देवः पश्यतु।

अनुदिवसमवर्धयत्प्रिया ते
यमचिरनिर्गतमुग्धलोलबर्हम्।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी ॥ १८ ॥

**सीता**—(सकौतुकस्नेहास्रम्।) एसो सो एसो सो (ख)

**रामः**—मोदस्व वत्स मोदस्व।

**सीता**—एव्वं होदु। (ग)

---

(क) भगवति तमसे एतेनापत्यसंस्मरणेनोच्छ्वसितप्रस्नुतस्तनी तयोश्च पितुः संनिधानेन क्षणमात्रं संसारिण्यस्मि संवृत्ता।

(ख) एष स एष सः।

(ग) एवं भवतु।

---

ग्धस्मितम् ॥ देवताप्रसादाद्देवतानुग्रहात् ॥ **प्रसव इति**। पर्यन्तः परा कोटिः अन्योन्यसंश्लेषणं अविनाभावहेतुभूतम्। तदुभयमपीत्याह—**अन्तःकरणेति**। दम्पत्योः जायापत्योः अन्तःकरणतत्त्वस्य हृदयवस्तुनः स्नेहसंश्रयात्। स्नेहः प्रीतिः। संश्रयः संश्रयणम्। अविश्लेष इति यावत्। स्नेहश्च संश्रयश्चेति समाहारद्वन्द्वः। तस्मान्निमित्तादित्यर्थः। अन्नाद्धेतोर्वसतीत्यत्र अन्नफलको वास इति बोधः। तद्वदत्रापि स्नेहसंश्रयणफलकानन्दग्रन्थिरिति। आनन्दग्रन्थिः आनन्दमयग्रन्थिः। आनन्दपदेन ग्रन्थ्यन्तरव्यावृत्तिः। अपत्यमिति पठ्यते परिभाष्यते ॥१७॥ **अनुदिवसमिति**। अचिरनिर्गतमुग्धलोलबर्हं प्रत्यग्रोत्पन्नसुन्दरचलपिच्छं यं अवर्धयत् स एष शिखण्डी वधूसखः सन् कदम्बे वृक्षे मणिमुकुट इव। आनुपूर्व्यात् पृथुकृशत्वात् नानावर्णत्वाच्च रत्नमयकिरीटसादृश्यम्। नदति

रामः—

भ्रमिषु कृतपुटान्तर्मण्डलावृत्तिचक्षुः-
प्रचलितचटुलभ्रूताण्डवैर्मण्डयन्त्या ।
करकिसलयतालैर्मुग्धया नर्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥ १९॥

हन्त तिर्यञ्चोऽपि परिचयमनुरुध्यन्ते ।

कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्धितोऽयमासीत् ।

सीता—( निरूप्य सास्रम् । ) सुट्ठु पच्चहिआणिदं अज्जउत्तेण । (क)

रामः—

स्मरति गिरिमयूर एष देव्याः
स्वजन इवात्र यतः प्रमोदमेति ॥ २० ॥

वासन्ती—अत्र तावदासनपरिग्रहं करोतु देवः ।

( राम उपविशति । )

---

(क) सुष्ठु प्रत्यभिज्ञातमार्यपुत्रेण ।

---

केकां करोति ॥ १८ ॥ भ्रमिष्विति । मण्डलं यथा भवति तथा आवृत्तिः मण्डलावृत्तिः । पुटे अन्तः पुटान्तः । पुटान्तः मण्डलावृत्तिः पुटान्तर्मण्डलावृत्तिः भ्रमिषु भ्रमणेषु । मयूरस्य मण्डलाकारनास्यचारिष्विति यावत् । कृता रचिता पुटान्तर्मण्डलावृत्तिः ययोस्तथोक्ते चक्षुषी यैस्तथोक्तानि कृतपुटान्तर्मण्डलावृत्तिचक्षूंषि । प्रचलितयोः चटुलयोः सुन्दरयोः भ्रुवोः ताण्डवानि नर्तनानि । कृतपुटान्तर्मण्डलावृत्तिचक्षूंषि च तानि प्रचलितचटुलभ्रूताण्डवानि चेति विग्रहः । तैः । तदुक्तं कनककविना—'किं चाधस्तादुपरि च नयन्त्यानतोन्निद्रपक्ष्मा चक्राकारं भ्रमयति मुहुर्विश्वमावर्तयन्ती' इति । करकिसलयतालैः करसंघट्टनजाततालध्वनिभिः । जातिभेदाभिप्रायकं बहुवचनम् । वत्सलेन सस्नेहेन ॥ १९ ॥ अनुरुध्यन्ते अनुसरन्ति । कतिपय इति । कतिपयकुसुमानामुद्गम उत्पत्तिः यस्मिन्निति विग्रहः । स्मरतीति । एष गिरिमयूरः गिरिप्रियो मयूरः गिरिमयूरः । शाकपार्थिववत्समासः । गिरेः प्रियत्वं उन्नतत्वनिरुपप्लवत्वादिना । अत्र

वासन्ती—

एतत्तदेव कदलीवनमध्यवर्ति
कान्तासखस्य शयनीयशिलातलं ते ।
अत्र स्थिता तृणमदाद्बहुशो यदेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म ॥ २१ ॥

रामः—इदं तावदशक्यमेव द्रष्टुम् । ( इत्यन्यतो रुदन्नुपविशति । )

सीता—सहि वासन्दि किं तुए किदं अज्जउत्तस्स मह अ एदं दंसअन्तीए । हद्धी हद्धी । सो एव्व अज्जउत्तो तं एव्व पञ्चवटीवणं सा एव्व पिअसही वासन्दी दे एव्व विविहविस्सम्भसक्खिणो गोदावरीकाणणुद्देसा दे एव्व जादणिव्विसेसा मिअपक्खिपाअवा सा ज्जेव चाहम् । मह उण मन्दभाइणीए दीसन्तं वि सव्वं एव्व एदं णत्थि त्ति सा ईदिसो जीवलोअस्स परिवत्तो । (क)

वासन्ती—सखि सीते कथं न पश्यसि रामभद्रस्यावस्थाम् ।

कुवलयदलस्निग्धैरङ्गैर्ददन्नयनोत्सवं
सततमपि नः स्वेच्छादृश्यो नवो नव एव यः ।
विकलकरणः पाण्डुच्छायः शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशोः प्रियः ॥ २२ ॥

सीता—पेक्खामि सहि पेक्खामि । (ख)

तमसा—पश्यन्ती प्रियं भूयाः ।

---

(क) सखि वासन्ति किं त्वया कृतमार्यपुत्रस्य मम चैतद्दर्शयन्त्या । हा धिक् हा धिक् । स एवार्यपुत्रस्तदेव पञ्चवटीवनं सैव प्रियसखी वासन्ती त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशास्त एव जातनिर्विशेषा मृगपक्षिपादपाः सैव चाहम् । मम पुनर्मन्दभाग्यायाः दृश्यमानमपि सर्वमेवैतन्नास्तीति तदीदृशो जीवलोकस्य परिवर्तः ।

(ख) प्रेक्षे सखि प्रेक्षे ।

---

सीतां स्मरतीत्यर्थः ॥ २० ॥ २१ ॥ नवेति । विकलकरणः शून्यचक्षुरादिकरणः शुचा दुःखेन परिदुर्बलः स्वधारणेऽप्यसमर्थः । बलं हि धारण-

विणेपि केण संभाविदं आसि । ता मुहुत्तमेत्तं जम्मन्तरादो विअ लद्धदंसणं बाहसलिलन्तरेसु पेक्खामि दाव वच्छलं अज्जउत्तम् । ( इति वैश्यन्ती स्थिता । ) (क)

**तमसा**—( परिष्वज्य सास्रम् । )

**विलुलितमतिपूरैर्बाष्पमानन्दशोक-**
**प्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा ।**
**स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते**
**धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः ॥ २३ ॥**

**वासन्ती**—

**ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः**
**स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।**
**कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः**
**पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ २४ ॥**

---

(क) हा देव एष मया विना अहमप्येतेन विनेति स्वप्नेपि केन संभावित- मासीत् । तन्मुहूर्तमात्रं जन्मान्तरादिव लब्धदर्शनं बाष्पसलिलान्तरेषु प्रेक्षे तावद्वत्सलमार्यपुत्रम् ।

---

पश्चकत्यादिति भावः ॥ २२ ॥ **हा इति** । केन संभावितमासीत् । केन हेतुना संभावितं उत्पादितम् । त्वयेति शेषः । दुर्लभलब्धदर्शनं यदृच्छया- लब्धदर्शनमिति व्याख्यातारः ॥ **विलुलितमिति** 'विलुठितम्' इति पाठान्तरम् । अतिपूरैः अतिशयितस्रोतोभिः विलुलितं विकीर्णमानन्द- शोकप्रभवमानन्दशोकहेतुकं बाष्पमश्रु अवसृजन्ती उत्पादयन्ती । पक्ष्मला च सा उत्ताना च सा दीर्घा च इति विग्रहे विशेषणसमासः । उत्तानविपुला । स्नेहस्य अनुरागस्य निष्यन्दः यस्यामस्तीति विग्रहः । दुग्धकुल्येव सुधामय- कृत्रिमाल्पसरिदिव स्नपयति स्नानं करोति । आदन्तत्वात् पुगागमे 'ग्लास्ना- वनुवमां च' इति वैकल्पिको ह्रस्वः ॥ २३ ॥ **ददत्विति** । मधूनि मकर- न्दानि श्चोतयन्ति क्षरन्तीति विग्रहः । 'श्चुतिर् क्षरणे' इत्यस्मादन्तर्भावित- ण्यर्थात् कर्तरि क्विप्प्रत्ययः । यद्वा मधुभिः मकरन्दैः श्चोतन्ति आर्द्रीकुर्वन्तीति

**रामः**—एहि सखि वासन्ति नन्वितः स्थीयताम् ।

**वासन्ती**—( उपविश्य सास्रम् । ) महाराज अपि कुशलं कुमारलक्ष्मणस्य ।

**रामः**—( अश्रुतिमाभिनीय । )

**करकमलवितीर्णैरम्बुनीवारशष्पै-**
**स्तरुशकुनिकुरङ्गान्मैथिली यानपुष्यत् ।**
**भवति मम विकारस्तेषु दृष्टेषु कोऽपि**
**द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः ॥ २५ ॥**

**वासन्ती**—महाराज ननु पृच्छामि अपि कुशलं कुमारलक्ष्मणस्येति ।

**रामः**—( आत्मगतम् । ) अये महाराजेति निष्प्रणयमामन्त्रणपदं सौमित्रिमात्रे च बाष्पस्खलिताक्षरः कुशलप्रश्नः । तथा मन्ये विदितसीतावृत्तान्तेयमिति । ( प्रकाशम् । ) आं कुशलं कुमारस्य ।

**वासन्ती**—( रुदती । ) अयि देव किं परं दारुणः खल्वसि ।

**सीता**—सहि वासन्दि किं तुमं एव्वंवादिणी होसि । पिआरुहो क्खु सव्वस्स अज्जउत्तो विसेसदो मह पिअसहीए । (क)

(क) सखि वासन्ति किं त्वमेवंवादिनी भवसि । प्रियार्हः खलु सर्वस्यार्यपुत्रो विशेषतो मम प्रियसख्याः ।

तृतीयान्तपाठे फलविशेषणं पुष्पविशेषणं वा । 'च्यु च्यवने' इत्यस्मात् भावे क्तप्रत्यये मधूनां च्युतं च्यवनं येभ्य इति पुष्पपक्षे । फलपक्षे तु कर्मणि क्तप्रत्ययेन मधुभ्यः च्युतैरिति पञ्चमीतत्पुरुषः । पुष्परससमृद्धौ तात्पर्यम् । तदेवं पक्षत्रये—आद्यः शकारचकाराभ्यां युक्तः पाठः । द्वितीयः शकारचकारयकारैर्युक्तः । तृतीयस्तु चकारयकाराभ्यामिति विवेकः । रज्यत्कण्ठा रागयुक्तकण्ठाः क्वणन्तु गीतवाद्यभेदेन शब्दं कुर्वन्तु । अत एव कूजन्त्विति नोक्तम् ॥ २४ ॥ अनाकर्णनं आकर्णनाभावम् । **करकमलेति** । करकमलवितीर्णैः करकमलदत्तैः अम्बुनीवारशष्पैः नीवारो धान्यविशेषः शष्पं बालतृणं तैः । अपुष्यत् अवर्धयत । अत्राम्बुना तरून् अम्बुनीवाराभ्यां शकुनीन् ।

**वासन्ती**—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमिहोत्तरेण ॥ २६ ॥

( इति मुह्यति । )

**तमसा**—स्थाने वाक्यनिवृत्तिर्मोहश्च ।

**रामः**—सखि समाश्वसिहि समाश्वसिहि ।

**वासन्ती**—( समाश्वस्य । ) तत्किमिदमकार्यमनुष्ठितं देवेन ।

**सीता**—सहि वासन्दि विरम विरम । (क)

**रामः**—लोको न मृष्यतीति ।

**वासन्ती**—कस्य हेतोः ।

**रामः**—स एव जानाति किमपि ।

**तमसा**—चिरादुपालम्भः ।

---

(क) सखि वासन्ति विरम विरम ।

---

कारे ॥ **त्वमिति** । त्वं जीवितं प्राणाः । त्वं मे द्वितीयं हृदयमसि । त्वं नयनयोः कौमुदी तद्वदानन्दिनी । 'कौ मोदन्ते जना यस्मात्तेनेयं कौमुदी मता' इति कौमुदीपदनिरुक्तेः । त्वमङ्गे विषये अमृतं पीयूषम् । तद्वज्जराप्रतिबन्धेन नित्ययौवनावहेत्यर्थः । अत्र प्राणाः प्राणा एव हृदयं हृदयमेव कौमुदी कौमुद्येव अमृतं अमृतमेव । त्वं तु प्राणा हृदयं कौमुद्यमृतमेतत् सर्वमिति प्राणाद्यपेक्षया वैलक्षण्यमपि सूच्यते । देवतायाः स्वस्या अपि ज्ञातुं वक्तुं चाशक्यत्वादाह--इत्यादिभिरिति । प्रियाणां प्रियवचनानां शतैः । अनन्तवाची शतशब्दः । 'शतं सहस्रमयुतं सर्वमानन्त्यवाचकम्' इत्युक्तेः । मुग्धां अनुरुध्य । 'उदययौवना मुग्धा' इति लक्षणलक्षितां सुन्दरीम् । त्वत्क्रौर्यमजानतीमिति वार्थः । अनुरुध्य अनुनीय तामेव पूर्वोक्तानुनयविषयभूतामेवात्र कथं त्यक्तवानसि । नाशितवानसीति वा । वाक्यशेषस्य दुःखातिशयेन वक्तुमशक्यतया प्रकरणाद्यनुप्र-

वासन्ती—

अयि कठोर यशः किल ते प्रियं
किमयशो ननु घोरमतःपरम् ।
किमभवद्विपिने हरिणीदृशः
कथय नाथ कथं बत मन्यसे ॥ २७ ॥

सीता—तुमं एव्व सहि वासन्दि दारुणा कठोरा अ जा एव्वं अज्जउत्तं पलित्तं पदीवेसि । (क)

तमसा—प्रणय एवं व्याहरति शोकश्च ।

रामः—सखि किमत्र मन्तव्यम् ।

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः ।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता ॥ २८ ॥

सीता—अज्जउत्त धरामि एसा धरामि । (ख)

रामः—हा प्रिये जानकि क्वासि ।

सीता—हद्धी हद्धी । अण्णो विअ अज्जउत्तो पमुक्ककण्ठं रोदिदि (ग)

तमसा—वत्से सांप्रतिकमेवैतत् । कर्तव्यानि खलु दुःखितैर्दुःखनिर्वापणानि ।

---

(क) त्वमेव सखि वासन्ति दारुणा कठोरा च यैवमार्यपुत्रं प्रदीप्तं प्रदीपयसि ।

(ख) आर्यपुत्र ध्रिये एषा ध्रिये ।

(ग) हा धिक् हा धिक् । अन्य इवार्यपुत्रः प्रमुक्तकण्ठं रोदिति ।

---

शान्तम् । त्वामुपलभ्यालम् । अतः परेण किम् । अतिक्रान्तत्वादिति भावः ॥ २६ ॥ २७ ॥ त्रस्तेति । ज्योत्स्नामयीव ज्योत्स्नाविकृतिरिव स्थिता क्रव्याद्भिः विलुप्ता । नाशितेति भावः । नियतमिति संभावनायाम् । अत्र प्रकरणे [illegible]

शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥ २९ ॥

विशेषतो रामभद्रस्य यस्य बहुतरप्रकारकष्टो जीवलोकः ।

इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोको जीवं कुसुममिव घर्मो ग्लपयति ।
स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-
स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम् ॥ ३० ॥

रामः—कष्टं भोः कष्टम् ।

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसा-
त्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ३१ ॥

सीता—एव्वं णेदं । (क)

रामः—हे भवन्तः पौरजानपदाः ।

न किल भवतां देव्याः स्थानं गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता न चाप्यनुशोचिता ।
चिरपरिचितास्ते ते भावाः परिद्रवयन्ति मा-
मिदमशरणैरद्यास्माभिः प्रसीदत रुद्यते ॥ ३२ ॥

(क) एवं न्विदम् ।

इव पृथग्जन इव । **पूरोत्पीड इति** । पूरोत्पीडे स्रोतोभूयस्त्वे । परीवाहः जलनिःसारणम् । प्रतिक्रिया प्रतीकारः चिकित्सा । शोकक्षोभे शोकाधिक्यप्रयुक्तप्रकृतिविपर्यासे । प्रलापैः परिदेवनैः ॥ २९ ॥ बहुप्रकाराणि कष्टानि बहुविधानि दुःखानि यस्मिन् तथोक्तः । **इदमिति** । अभियुक्तेन तत्परेण विधिवत् यथाशास्त्रं विलपनं चासौ विनोदश्चेति विग्रहः । उच्छ्वासः प्राणधारणम् ॥ ३० ॥ **दलतीति** । दलति स्फुटति । द्विधा न भिद्यते । पृथक्कारेण शकलद्वयं न भवतीत्यर्थः । न कृन्तति न छिनत्ति ॥३१॥ **न किलेति** । देव्याः सीतायाः गृहे स्थानं गृहस्थितिः न चाप्यनुशोचिता । तत्परित्यागहेतुकशोकोऽपि युष्माकं नेति भावः । भावाः अभिप्रायाः तथा द्रवयन्ति वाचामगोचरं यथा तथा विलापयन्ति । 'परिद्रवयन्ति' इत्यपि पाठः । रुद्यते रोदनं करोमि । भावे लट् ।

वासन्ती—( स्वगतम् । ) अतिगंभीरमापूरणं मन्युसंभारस्य । ( प्रकाशम् । ) देव अतिक्रान्ते धैर्यमवलम्ब्यताम् ।

रामः—सखि किमुच्यते धैर्यमिति ।

**देव्या शून्यस्य जगतो द्वादशः परिवत्सरः ।**
**प्रनष्टमिव नामापि न च रामो न जीवति ॥ ३३ ॥**

सीता—मोहिदम्हि एदेहिं अज्जउत्तवअणेहिं । (क)

तमसा—एवमेव वत्से ।

**नैताः प्रियतमा वाचः स्नेहार्द्राः शोकदारुणाः ।**
**एतास्ता मधुनो धाराः श्च्योतन्ति सविषास्त्वयि ॥ ३४ ॥**

रामः—अयि वासन्ति मया खलु

**यथा तिरश्चीनमलातशल्यं**
**प्रत्युप्तमन्तः सविषश्च दंशः ।**
**तथैव तीव्रो हृदि शोकशङ्कु-**
**र्मर्माणि कृन्तन्नपि किं न सोढः ॥ ३५ ॥**

सीता—एव्वंम्हि मन्दभाइणी पुणोवि आआसआरिणी अज्जउत्तस्स । (ख)

---

(क) मोहितास्म्येतैरार्यपुत्रवचनैः ।

(ख) एवमस्मि मन्दभागिनी पुनरप्यायासकारिणी आर्यपुत्रस्य ।

---

अतिगभीरमतिगूढम् । अवलम्ब्यतां आश्रीयताम् । त्वयेति शेषः ॥ **देव्या इति** । द्वादशानां पूरणः द्वादशः । 'तस्य पूरणे डट्' । परिवत्सरः संवत्सरः । रामः न जीवतीति न । जीवत्येवेत्यर्थः । जीवनाभावोऽन्यादृश इति व्यज्यते ॥ ३३ ॥ **नैता इति** । प्रियतमा इष्टतमाः स्नेहार्द्रा अनुरागशीतलाः शोकदारुणा दुःखेन रूक्षा एता वाचो न । किंतु एताः सविषा मधुनो धाराः श्च्योतन्ति स्रवन्ति । अत्रापह्नुतिरलंकारः ॥ ३४ ॥ **यथेति** । तिरश्चीनं तिर्यग्भूतं प्रत्युप्तं निखातं अलातशल्यमुल्कामयं लोहकीलाग्रं सविषो दन्तश्च यथा तीव्रः तथैव तीव्रो मर्माणि हृदयादीनि कृन्तन् सन्नपि छिन्दन् सन्नपि हृदि [illegible]

रामः—एवमतिनिष्कम्पस्तम्भितान्तःकरणस्यापि मम संस्तुतसतिप्रियवस्तुदर्शनादुद्दामोयमावेगः। तथाहि।

वेलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं
यो यो यत्नः कथमपि मयाधीयते तं तमन्तः।
भित्त्वा भित्त्वा प्रसरति बलात्कोऽपि चेतोविकार-
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः॥ ३६॥

सीता—एदिणा अज्जउत्तस्स दुव्वारदारुणारम्भेण दुःखसंखोएण परिमुसिअणिअदुक्खं किंपि पमुद्धं मे हिअअं। (क)

वासन्ती—(स्वगतम्।) कष्टमभ्यापन्नो देवः। तदन्यतः क्षिपामि तावत्। (प्रकाशम्।) चिरपरिचितानिदानीं जनस्थानभागानवलोकनेन मानयतु देवः।

रामः—एवमस्तु। (इत्युत्थाय परिक्रामति।)

---

(क) एतेनार्यपुत्रस्य दुर्वारदारुणारम्भेण दुःखसंक्षोभेण परिमुषितनिजदुःखमिव किमपि प्रमुग्धं मे हृदयम्।

---

कः॥ ३५॥ वेलेति। वेलाया मर्यादाया उल्लोलः उद्गतः। अतिवेल इत्यर्थः। क्षुभितः प्रवाहभूयस्तया नदीवत् क्षोभवांश्च यः करुणः प्रियजनविश्लेषजन्यदुःखातिशयः तस्य उज्जृम्भणमभिवृद्धिः तस्य स्तम्भनं प्रतिरुद्धिः तदर्थम्। 'करणस्तम्भनार्थम्' इति पाठे वेलोल्लोलं वेलातिक्रान्तं क्षुभितं क्षोभः यस्य यथोक्तस्य करणस्य। हृदयादेरित्यर्थः। कथमपि प्रयासेन समाधीयते उत्पाद्यते। चेतोविकारः संभ्रमातिशयः। ओघः दीर्घप्रवाहः॥ ३६॥ आर्यपुत्रस्येति। दुर्वारो दुर्निवर्त्यः दारुणानां क्रूरमूर्च्छासंतापादीनामारम्भ उपादानं येनेति विग्रहः। परिमुषितं निजदुःखं स्वीयदुःखं यस्येति तथोक्तम्। स्फुटति दलति॥ आक्षिपामि। अन्यत्र नयामीत्यर्थः॥ संदीपन इति। विनोदनोपायः चिरपरिचितजनस्थानाभोगावलोकनरूपः दुःखस्य संदीपन एव

---

१ गूढ. २ संस्तुतबहुतरप्रियदर्शनात्. ३ अथायमावेगः. ४ वेलो०, हेलो०.

**सीता**—संदीवण एव्व दुःखस्स पिअसहीए विणोदणोवाओ त्ति तक्केमि। (क)

**वासन्ती**—( सकरुणम्। ) देव देव

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद्गोदावरीसैकते।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः॥ ३७॥

**सीता**—दालुणासि वासन्ति दालुणासि। जा एदेहिं हिअअमम्मगूढसल्लसंघट्टेहिं पुणोपुणोत्ति मं मन्दभाइणिं अज्जउत्तं अ संदावेसि। (ख)

(क) संदीपन एव दुःखस्य प्रियसख्या विनोदनोपाय इति तर्कयामि।

(ख) दारुणासि वासन्ति दारुणासि। या एतैर्हृदयमर्मगूढशल्यसंघट्टैः पुनःपुनरपि मां मन्दभागिनीमार्यपुत्रं च सन्तापयसि।

उद्दीपनहेतुरेवेति तर्कयामि जानामि॥ **अस्मिन्निति**। अस्मिन्नेव लतागृहे त्वं अभवः स्थितवान्। तन्मार्गे सीताया आगमनमार्गे दत्तं ईक्षणं नेत्रं येन तथोक्तः। हंसैः कृतमुत्पादितं कौतुकं हर्षः यस्यास्तथोक्ता। गोदावरीसैकते पुलिनोच्चये। आयान्त्या आगच्छन्त्या तया सीतया परिदुर्मनायितमिव परिकुपितमनस्कमिव स्थितम्। नतु वस्तुतः कुपितहृदयमित्यर्थः। त्वां वीक्ष्य कातर्यात् अपराधप्रतिसंधानजनितसाध्वसात् अरविन्दकुड्मलनिभः पद्मकोशसदृशो मुग्धः सुन्दरः प्रणामाञ्जलिः। मस्तकन्यस्तकरसंपुटादिप्रणामाङ्गभूताञ्जलिरित्यर्थः। अथवा 'नामयत्यपि वा देवं प्रह्वीभावयति ध्रुवम्। प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन्॥ अतो वा नमउक्तीदं यत्तं नामयति स्वयम् वाचा नम इति प्रोच्य वपुषा मनसा च यत्॥' इति भगवच्छास्त्रोक्तरीत्या प्रणामः कोपोद्धतरामहृदयनमनहेतुभूतोऽञ्जलिरित्यर्थः। उक्तं च—'अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी' इति। अत एव रामायणे—कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम्। अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात्॥ इति। बद्धः घटितः॥ ३७॥ **दारुणेति**। हृदयमर्मोद्घाटितशल्यस्य हृदयमर्मणि स्थितकीलाग्रस्य संघट्टैः संचलनैरेतैः पुरावृत्तान्तकथनैरार्यपुत्रं मां

हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ ३८ ॥

( इति मूर्च्छति । )

सीता--हद्धी हद्धी पुणोवि प्पमुद्धो अज्जउत्तो । (क)

वासन्ती---देव समाश्वसिहि समाश्वसिहि ।

सीता---अज्जउत्त मं मन्दभाइणिं उद्दिसिअ सअलजीवलोअमङ्गलाधारस्स दे वारं वारं संसइदजीविअदालुणो दशापरिणामो त्ति हा हदह्मि । ( इति मूर्च्छति । ) (ख)

तमसा---वत्से समाश्वसिहि समाश्वसिहि । पुनस्त्वत्पाणिस्पर्श एव संजीवनोपायो रामभद्रस्य ।

---

(क) हा धिक् हा धिक् पुनरपि प्रमूढ आर्यपुत्रः ।

(ख) आर्यपुत्र मां मन्दभागिनीमुद्दिश्य सकलजीवलोकमाङ्गलिकजन्मलाभस्य ते वारं वारं संशयितजीवितदारुणो दशापरिणाम इति हा हतास्मि ।

---

च स्मरयसि । मद्विषयकस्मृतिमार्यपुत्रस्य जनयसीत्यर्थः । या स्मरयसि सा त्वं दारुणेति पूर्वेणान्वयः ॥ चण्डि कठिने जानकि जनकपुत्रि नानुकम्पसे दयां न करोषि । जानकीत्युक्त्या परमदयालुजनकराजपुत्र्यास्तवेदं निर्दयत्वं नोचितमिति व्यज्यते । हा हेति । हाहाशब्दो दुःखातिशयद्योतकः । हृदयं स्फुटति दलति । देहबन्धः शरीरावयवानां संधिः । जातावेकत्वम् । ध्वंसते विशीर्णो भवति । जगत् लोकं शून्यं असत्कल्पम् । अभावप्रतियोगीति यावत् । मन्ये जानामि । अविरला अविच्छिन्ना ज्वाला यस्मिन् कर्मणि तत्तथोक्तम् । अन्तः शरीरान्तः ज्वलामि । काष्ठवत् ज्वलामीति यावत् । विधुरः ज्ञानादिशून्यः सीदन् विशीर्णीभवन् अन्तरात्मा अन्धे अन्धयति लोकानित्यन्धं तस्मिन् तमसि मज्जति अवगाढो भवति । मोहो मूर्च्छा विष्वक् परितः स्थगयति संच्छादयति । कथं करोमि किं करोमि । हृदयस्फोटादि निवारयामि उत त्वदागमनार्थं लोकाननुनयामि अथवा तान्निगृह्य त्वामानेष्यामि वेति भावः ॥ ३८ ॥ पुनरपि मूढो मूर्छितः ॥ वारं वारं पदे पदे संशयितजीवितः संशयितं संशयविषयं जीवितं यस्मिंस्तथोक्तः । मरणपर्यवसायीति भावः । अत एव

संभावयात्मनो जीवितेश्वरम् ।

( सीता ससंभ्रममुपसृत्य हृदि ललाटे च स्पृशति । )

**वासन्ती**—दिष्ट्या प्रत्यापन्नचेतनो रामभद्रः ।

**रामः**—

आलिम्पन्नमृतमयैरिव प्रलेपै-
  रन्तर्वा बहिरपि वा शरीरधातून् ।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
  दानन्दादपरविधं तनोति मोहम् ॥ ३९ ॥

( आनन्दनिमीलिताक्ष एव ) सखि वासन्ति दिष्ट्या वर्धसे ।

**वासन्ती**—देव कथमिव ।

**रामः**—सखि किमन्यत् । पुनः प्राप्ता जानकी ।

**वासन्ती**—अयि देव रामभद्र क्व सा ।

**रामः**—( स्पर्शसुखमभिनीय । ) पश्य नन्वियं पुरत एव ।

**वासन्ती**—अयि देव किमिति मर्मच्छेददारुणैरेभिः प्रलापैः प्रियसखीदुःखदग्धामपि मां पुनर्मन्दभाग्यां दहसि ।

---

दारुणः क्रूरः दशापरिणामः दशापरिपाकः ॥ **हा प्रियसखीति** । जीवितेश्वरं प्राणनाथं रामं संभावय संभावितं कुरु । रामासंभवं परिहरस्वेत्यर्थः ॥ हृदि ललाटे च स्पृशति । इदं च लोकेऽनुभवसिद्धम् ॥ **दिष्ट्येति** । दिष्ट्येत्यानन्दे । प्रत्यापन्ना पुनरागता चेतना प्रज्ञा यस्य स तथोक्तः ॥ **आलिम्पन्निति** । अमृतमयैः अमृतस्वरूपैः । चिन्मयमित्यादाविव स्वार्थिको मयट् प्रत्ययः । प्रकृष्टो लेपः यैस्ते । लेपसाधनद्रव्यैः अन्तर्वा बहिरपि वा अन्तर्बहिश्च शरीरं धातूंश्च । नाडीश्च अन्तर्नाडीः बहिः शरीरमिति विवेकः । आलिम्पन्निव । सर्वाङ्गीणलेपनकर्तेति संभावनीयः । जीवयन् प्राणप्रतिष्ठाहेतुभूतः अकस्मात् निर्हेतुकः संस्पर्शः पुनरपि आनन्दात् आनन्दमुत्पाद्यापरं मोहं दुःखहेतुकपूर्वमूर्च्छातिरिक्तमूर्च्छाम् । आनन्दादिति ल्यब्लोपे पञ्चमी । यद्वा आनन्दादिति हेतौ पञ्चमी । तथा च दुःखजन्यपूर्वमूर्च्छातिरिक्ताम् । आनन्दहेतुकां मूर्च्छामादधतीव उत्पादयतीव । अन्ये तु परो न भवतीत्यपरः । अनन्य इत्यर्थः । आनन्दादपरं मोहं आनन्दात्मकमूर्च्छामित्याहुः ॥ ३९ ॥ सानन्दमुन्मीलिताक्ष एव उन्मीलिते स्पष्टमुकुलीभावे अक्षिणी यस्य तथोक्तः ।

**सीता**—ओसरिदुं इच्छम्मि । एसो उण चिरसंभावसोम्मसीअलेण अज्जउत्तप्फरिसेण दीहदारुणंवि झत्ति संदावं हरन्तेण वज्जलेवोवणिबद्धो विअ सिज्जन्तणीसहविपल्हत्थो वेअणसीलो अवसो विअ मे हत्थो । (क)

**रामः**—सखि कुतः प्रलापाः ।

**गृहीतो यः पूर्वं परिणयविधौ कंकणधरः**
**श्चिरं स्वेच्छास्पर्शैरमृतशिशिरैर्यः परिचितः ।**

**सीता**—अज्जउत्त सो एव्व दाणिं सि तुमम् । (ख)

**रामः**—

**स एवायं तस्यास्तुहिननिकरौपम्यसुभगो**
**मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥ ४० ॥**

( इति गृह्णाति । )

---

( क ) अपसर्तुमिच्छामि । एष पुनः चिरसद्भावसौम्यशीतलेन आर्यपुत्रस्पर्शेन दीर्घदारुणमपि झटिति संतापं हरता वज्रलेपोपनिबद्ध इव स्विद्यन्निःसहविपर्यस्तो वेपनशीलोऽवश इव मे हस्तः

( ख ) आर्यपुत्र स एवेदानीमसि त्वम् ।

---

मर्मच्छेदवत् हृदयाद्यवयवक्षतिवत् दारुणैः दुःसहैः प्रलापैः अनर्थकवचोभिः दहसीत्यत्रान्वयः । प्रियसख्याः सीतायाः विपत्त्या विपदा यद्दुःखं तेन दग्धां भस्मीक्रियमाणाम् ॥ **अपसर्तुमिति** । चिरस्य बहुकालरूढस्य प्रणयस्य स्नेहस्य संभारेण अतिशयेन हेतुना सौम्यः आह्लादकरः शीतलः शीतश्च तथाविधेन । दीर्घश्चासौ दारुणश्चेति विग्रहः । खञ्जकुब्जादिवत् समासः । तथाविधं संतापं झटिति उल्लाघयता लघूकुर्वता आर्यपुत्रस्पर्शेन वज्रलेपेन उपनद्ध इव घटित इव पर्यस्तव्यापारः । निष्पन्द इत्यर्थः । मे अग्रहस्तः आसञ्जित इव लग्न इव ॥ प्रलापैरिति वासन्तीवाक्यस्योत्तरमाह—'सखि, कुतः प्रलापाः' इति । **गृहीत इति** । यः करः परिणयविधौ विवाहविधौ कंकणधरः गृहीतः यः करः सुधाया अमृतस्य सूतिरुत्पत्तिः यस्मात्तस्य चन्द्रस्य अमृतशिशिरैः सुधाशीतलैः पादैः किरणैः परिचितः संश्लिष्टः । उक्तविशेषणसाम्यादाह—आर्यपुत्र स एवेदानीं त्वमसि इति । यः करः कंकणधरो गृहीतः यः सुधासूतेः पादैः परिचितः स एव त्वमिदानीमित्यर्थः । उभयत्रापि परिणयविधौ कंकणधरत्वं लावण्यसंश्लिष्टत्वरूपसुधासूतिकिरणपरिचितत्वं चावशिष्टमिति कृत्वा

संवृत्तो। (क)

**रामः**—सखि वासन्ति आनन्दनिमीलितेन्द्रियः साध्वसेन परवानस्मि। तत्त्वं तावदेनां धारय।

**वासन्ती**—कष्टमुन्माद एव।

(सीता ससंभ्रमं हस्तमाक्षिप्यापसर्पति।)

**रामः**—हा धिक् प्रमादः।

**करपल्लवः स तस्याः सहसैव जडो जडात्परिभ्रष्टः।**
**परिकम्पिनः प्रकम्पी करान्मम स्विद्यतः स्विद्यन्॥ ४१॥**

**सीता**—हद्धी हद्धी। अज्जवि अणवत्थिदत्थिमिदमूढघुण्णन्तणअणो ण पज्जवत्थावेदि अत्ताणअं।

**तमसा**—(सस्नेहंकौतुकस्मितं निर्वर्ण्य।)

**सस्वेदरोमाञ्चितकम्पिताङ्गी**
**जाता प्रियस्पर्शसुखेन वत्सा।**

---

(क) हा धिक् हा धिक्। आर्यपुत्रस्पर्शमोहितायाः प्रमादः खलु मे संवृत्तः।
(ख) हा धिक् हा धिक्। अद्याप्यनवस्थितस्तिमितमूढघूर्णन्नयनो न पर्यवस्थापयत्यात्मानम्।

---

लवलीकन्दलेन लवलीनामकलताङ्कुरेण निभः सदृशः तदितरकरेण गृहीतान्यकरेण औपम्येन सादृश्येन सुभगः मनोज्ञः। सव्यकरसादृश्यं दक्षिणकरस्य तथा दक्षिणकरसादृश्यं सव्यकरस्येति भावः। तस्याः स एव पाणिः मया लब्धः॥ ४०॥ गृह्णाति ग्रहणमभिनयति॥ प्रमादः अनवधानम्॥ प्रियास्पर्शसाध्वसेन प्रियायाः सीतायाः स्पर्शेन यत् साध्वसं शङ्काजं भयं तेन परवान् परवशः॥ उन्मादः चित्तविभ्रमः॥ हस्तमाक्षिप्य रामहस्तं निरस्य॥ **करपल्लव इति।** प्रकम्पी चञ्चलः स्विद्यन् स्वेदवान् तस्याः स करपल्लवः परिकम्पिनः चञ्चलात् जडात् मम करात् अनवधानतो जडात्मनो मम करात् सहसा परिभ्रष्टः परिच्युतोऽभवत्॥ ४॥ अनुबद्धा उत्पन्ना वह्नी घूर्णमाना उद्गच्छन्ती वेदना यस्य तमात्मानं न संस्थापयामि न स्थिरं करोमि॥ ४२॥

---

१ आनन्दमीलितः प्रियास्पर्शसा०. २ तत्त्वमपि धारयेमाम्। ३ जडात्मनः. ४ अणवद्ध-

सीता—( स्वगतम् । ) अह्महे अवसेन एदेण अत्ताणएण लज्जाविदह्मि भअवदीए तमसाए । किंत्ति किल एसा मण्णिस्सदि एसो परिच्चाओ एसो अहिसङ्गोत्ति । ( क )

रामः—( सर्वतोऽवलोक्य । ) हा कथं नास्त्येव । नन्वकरुणे वैदेहि ।

सीता—सच्चं अकरुणह्मि जा एव्वंविहं तुमं पेक्खन्दी जीवेमि एव्व[1] । ( ख )

रामः—क्वासि देवि प्रसीद[2] । न मामेवंविधं परित्यक्तुमर्हसि ।

सीता—अयि अज्जउत्त विवरीदं[3] विअ एदम् । ( ग )

वासन्ती—देव प्रसीद प्रसीद । स्वेनैव लोकोत्तरेण धैर्येण संस्तभ्यातिभूमिर्गतविप्रलंभमात्मानम्[4] । कुतोत्र मे प्रियसखी ।

रामः—व्यक्तं नास्त्येव कथमन्यथा वासन्त्यपि तां न पश्येत् । अपि खलु स्वप्न एष स्यात् । न चास्मि सुप्तः । कुतो[5] रामस्य निद्रा ।

(क) अह्महे अवशेनैतेनात्मना लज्जापितास्मि भगवत्या तमसया । किमिति किलैषा मंस्यत एष परित्याग एषोऽभिषङ्ग इति ।

( ख ) सत्यमकरुणास्मि यैवंविधं त्वां प्रेक्षमाणा जीवाम्येव ।

( ग ) अयि आर्यपुत्र विपरीतमिवैतत् ।

कथं नास्त्येवेति व्यक्तम् । स्फुटमित्यर्थः । कथमन्यथा वासन्ती न पश्येत् । अन्यथा सीताया अस्तित्वे वासन्ती कथं कस्माद्धेतोः न पश्येत् । स्वस्य भ्रान्तिशङ्कया वनदेवतायाः प्रमितिप्रकर्षं विभाव्य वासन्तीत्युक्तम् । एवं योग्यानुपलम्भेन सीताया नास्तित्वं निश्चित्य पूर्वोक्तस्पर्शनस्य भ्रमरूपत्वं मीमांसते । अपि खलु स्वप्न एष स्यात् । एष सीतास्पर्शः स्वप्नः स्यात् । स्वाप्निकज्ञानविषयः स्यादिति संभावना । यद्वा एष सीतास्पर्शः स्वप्नः स्यात्स्वप्नावस्थोत्पादितः किमु । स्वप्नावस्थायां हि 'संध्ये सृष्टिराह हि' इति सूत्रप्रामाण्यात्

१ णं धरामि एव्व जीविदं ( ननु धराम्येव जीवितम् ). २ क्वासि प्रिये । देवि प्रसीद. ३ विप्पदीवं विअ ( विप्रतीपमिव ). ४ अतिभूमिं गतमात्मा०. ५ अथवा कुतो

सर्वथा स एवैष भगवाननेकवारपरिकल्पनानिर्मितो विप्रलम्भः पुनः पुनरनुबध्नाति माम् ।

सीता—मए एव्व दारुणाए विप्पलद्धो अज्जउत्तो । (क)

वासन्ती—देव पश्य पश्य

पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथ-
स्ते चैते पुरतः पिशाचवदनाः कङ्कालशेषाः खराः ।
खड्गच्छिन्नजटायुपक्षतिरितः सीतां चलन्तीं वह-
न्नन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्थादरिः ॥ ४६ ॥

सीता—( सभयम् । ) अज्जउत्त तादो वावादीअदि अहं वि अवहरिज्जामि । ता परित्ताहि । (ख)

---

( क ) मयैव दारुणया विप्रलब्ध आर्यपुत्रः ।

( ख ) आर्यपुत्र तातो व्यापाद्यते अहमप्यपह्रिये । तस्मात्परित्रायस्व परित्रायस्व ।

---

तत्पुरुषानुभाव्यतत्तत्पदार्थसृष्टिः परमात्मकर्तृकाभ्युपगम्यते । विस्तरस्तूत्तरमीमांसायां द्रष्टव्यः । स्वप्नं प्रति सुप्तेः कारणत्वादाह—न चास्मि सुप्त इति । तदुपपादयति—कुतो रामस्य निद्रेति । 'अनिद्रः सततं रामः' इति सीतावियोगे रामस्य निद्रा नास्तीति प्रसिद्धमेवेति ननूपपत्तिरिति भावः । पर्यवसितमाह—सर्वथेत्यादिना । मम वासन्त्याश्चानुपलम्भान्निद्राया अभावेन स्वप्नानुपपत्तेश्च सर्वप्रकारेणापि सीतास्पर्शनं भ्रमरूपमिति भावः । विप्रलम्भः भ्रमः। भगवानित्यनतिलङ्घनीयत्वप्रयुक्तपूज्यताख्यापनार्थम् । अनुबध्नात्यनुसरति ॥ दारुणया कठिनया । विप्रलब्धः वञ्चितः । भ्रान्त इति वा ॥ पौलस्त्यस्येति । अयं दृश्यमानः । उद्देश्यसमर्पकमिदम् । कृष्णायसविकारः कार्ष्णायसः । लोहमय इत्यर्थः । जटायुषा विघटितः प्रध्वंसितः । पौलस्त्यस्य रावणस्य रथः स्यन्दनम् । विधेयसमर्पकमिदम् । एते पुरतः पुरोवर्तमानाः कङ्कालशेषाः शरीरास्थिरूपशिष्टांशाः । ते पिशाचवदनाः खरा रावणस्यन्दनीयाः पिशाचमुखा रासभाः । खड्गेन छिन्ना कृत्ता च सा जटायुपक्षतिश्चेति समानाधिकरणसमासः । इतः अत्र

रामः—( सवेगमुत्थाय । ) आः पाप तातप्राणसीतापहारिन् क्व यासि ।

वासन्ती—अयि देव राक्षसकुलप्रलयधूमकेतो किमद्यापि ते मन्युविषयः ।

सीता—अह्मो अहंवि उब्भन्तह्मि । (ग)

रामः—अन्य एवायमधुना विपर्ययो वर्तते ।

उपायानां भावादविरतविनोदव्यतिकरै-
र्विमर्दैर्वीराणां जगति जनितात्यद्भुतरसः ।
वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभूत्
कटुस्तूष्णीं सह्यो निरवधिरयं त्वप्रतिविधः ॥ ४४ ॥

---

( ग ) अहो अहमप्युद्भ्रान्तास्मि ।

---

भ्युदस्थादभ्युद्गतवान् । इत इत्यस्माद्देशादिति वा ॥ ४३ ॥ आः पापेत्यादि । अत्र रोषसंभ्रमवचनरूपं तोटकं नाम संध्यङ्गमुक्तम् ॥ प्रलयधूमकेतो प्रलयसूचकधूमकेतुनामकग्रहसदृशेति भावसंबुद्धिः । यद्वा राक्षसकुलस्य प्रलये धूमकेतुरग्निः । राक्षसकुलदाहे प्रलयाग्निसदृशेत्यर्थः । मन्युविषयः क्रोधविषयः ॥ अन्य एव पूर्वसीतावियोगाद्विलक्षण एव विपर्ययः सीतावियोगरूपविपर्यासः । वैलक्षण्यमेवाह—उपायानामिति । उपायानां सेनासंनाहसेतुबन्धादिसाधनानां भावात्सत्त्वादविरलाः संतता विनोदानां दुःखविस्मरणहेतूनां व्यतिकराः संबन्धा येषु तथोक्ताः तथाविधैः वीराणां सुग्रीवप्रभृतीनां विमर्दैः परस्परसंप्रहारैर्जनित उत्पादितो जगतामत्यद्भुतरसो वीररसमयरसो येनेति तथोक्तः । वीररसादद्भुतरसस्योत्पत्तिरिति रसविदः । तदुक्तम्—'हास्यो भवति शृङ्गारात्करुणो रौद्रकर्मणः । अद्भुतश्च तथा वीराद्बीभत्साच्च भयानकः ॥' इति । मुग्धे सुन्दरे आक्षिणी यस्या इति बहुव्रीहिः । 'न त्वामिहस्थां जानीते रामः कमललोचने । तेन त्वां नानयत्याशु शचीमिव पुरंदरः ॥' इत्युक्तम् । स वियोगः पूर्वकालिकविरहः । रिपुघातावधिरभूद्रावणसंहारपर्यन्तोऽभूत् । कटुः क्रूरः । तूष्णीं सह्यः उपायाद्यभावात् जोषंभावेन सह्यः । अयं तु प्रविलय इदानींतनवियोगः । पुनर्दर्शनाभावाभिप्रायेण वियोगस्य प्रलयत्वोक्तिः । निरवधिर्यावज्जीवभावीत्यर्थः ॥ ४४ ॥ अहमपि...

मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषये[5] तत्र प्रिये क्वासि मे[6] ॥ ४५ ॥

सीता—[7]बहुमणाविदह्मि तं पुव्वविरहं । (ख)

रामः—सखि वासन्ति दुःखायैव सुहृदामिदानीं रामस्य दर्शनम् । कियच्चिरं त्वां रोदयिष्यामि । तदनुजानीहि मां गमनाय ।

सीता—( सोद्वेगमोहं तमसामाश्लिष्य । ) [8]भअवदि तमसे कहं गच्छदि एव्व अज्जउत्तो । ( इति मूर्च्छति । ) (ग)

तमसा—[11]वत्से समाश्वसिहि । समाश्वसिहि । [12][13]नन्वावामायुष्मतोः

( क ) निरवधिरिति हा हतास्मि मन्दभागिनी ।
( ख ) बहुमानितास्मि तं पूर्वविरहम् ।
( ग ) हा भगवति तमसे गच्छतीदानीमार्यपुत्रः । किं करोमि ।

बहुमानवत्यस्मि । रिपुघातावधिरिति रावणसंहारस्य तन्मूलकत्वोक्तेरिति भावः । 'न त्वदर्थं मया कृतम्' इति हि पूर्वं रामेणोक्तम् । निरवधिरिति हा हतास्मि । अस्य वियोगस्य निरवधित्वोक्तेः प्रत्याशा छिन्नेति भावः । व्यर्थमिति । यत्र प्रदेशे कपीन्द्रसख्यं सुग्रीवमैत्र्यम् । इदमुपलक्षणं सुग्रीवापेक्षयोपसर्जनत्वस्यापि । तदुक्तं रामायणे—'लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति' इति । 'स रामो वानरेन्द्रस्य प्रसादमभिकाङ्क्षते' इति च । व्यर्थं निरर्थकम् । हरीणां वानराणां वीर्यं पराक्रमः यत्र वृथा निष्प्रयोजकः । जाम्बवतः प्रज्ञा युक्तायुक्तकुशलता यत्र न सार्थिकेत्यध्याहारः । वायोः पुत्रस्य हनूमतः गतिरपि न सार्थिका । मार्गं सेतुम् । न क्षमः न योग्यः । सौमित्रेरपि लक्ष्मणस्य । अपिशब्दात् स्वस्य । पत्रिणां बाणानामविषये अगोचरे तत्र तथाविधे क्व कस्मिन्देशे असि भवसि ॥ ४५ ॥ सुहृदां मित्राणां रामदर्शनं दुःखायैव दुःखफलदमेव । रोदयिष्यामि रुदतीं करोमि । अनुजानीहि अनुमतिं कुरु ॥ वर्षवृद्धिमङ्गलानि द्वादशवर्षपूर्तिमङ्गलानि देवतापूजादीनि शुभानि । आयुष्मतो

१ अस्मात्पूर्वं—बहुमाणिदह्मि पुव्वविरहे ( बहुमानितास्मि पूर्वविरहे ) इत्यधि० २ इति रोदिति इत्य०. ३ कथं गो:. ४ आगमनतो न. ५ अविषयः ६ गोः. ७ बहुमाणिदह्मि पुव्वविरहे. ८ सलिकयमिरि. ९ आलिङ्ग्य, १० हा ... तमसे गच्छदि दाणिं अज्जउत्तो । किं करिस्सम्, ११ वत्से जानकि. १२ अस्मादनन्तरं—विधिस्तवानुकूलो भविष्यति । इत्यधि. १३ तदायुष्मतो......वर्षवृद्धिमङ्ग.

कुशलवयोर्वर्षवर्धनमङ्गलानि संपादयितुं भागीरथीपदान्तिकमेव गच्छावः ।

**सीता**—भअवदि पसीद । खणमेत्तं त्ति दाव दुल्लहदंसणं जणं पेक्खामि । (क)

**रामः**—अस्ति चेदानीमश्वमेधीय सहधर्मचारिणी मे ।

**सीता**—( साक्षेपम् । ) अज्जउत्त का । (ख)

**रामः**—हिरण्मयी सीताप्रतिकृतिः ।

**सीताः**—( सोच्छ्वासास्रम् । )अज्जउत्तो दाणिं सि तुमम् । अह्महे उक्खाणिदं दाणिं मे परिच्चाअलज्जासल्लं अज्जउत्तेण । (ग)

---

(क) भगवति प्रसीद । क्षणमात्रमपि तावद्दुर्लभदर्शन जनं प्रेक्षे ।

(ख) आर्यपुत्र का ।

(ग) आर्यपुत्र इदानीमसि त्वम् । अहो उत्खातमिदानी मे परित्यागलज्जाशल्यमार्यपुत्रेण ।

---

कुशलवयोः कुशलवोद्देशेन संपादयितुमुत्पादयितुम् । भागीरथ्याः संबन्धद्योतनायेयमुक्तिः ॥ अश्वमेधस्य सहधर्मचारिणीति विग्रहः । दम्पत्योः सहाधिकारत्वात् । अश्वमेधनिरूपितकर्तृकत्ववती जायास्तीति भावः ॥ साक्षेपम् । आक्षेपश्चोदनं तेन सह वर्तत इत्यर्थः । क्रियाविशेषणम् । आर्यपुत्र का सहधर्मचारिणीति शेषः ॥ परिणीतमपि । भावे क्तः । परिणयोऽपि किमिति काका योजनीयम् । सितापरित्यागानन्तरं न केवलं शरीरधारणं किंतु परिणयोऽपि जातः किमिति समुच्चयार्थः । सीतावियोगे रामस्य शरीरधारणमाश्चर्यमिति प्रसिद्धम् । तदुक्तं हनुमता—'दुष्करं कृतवान्रामो हीनो यदनया प्रभुः । धारयत्यात्मनो देहं न शोकेनावसीदति ॥' इति । 'दुष्करं कुरुते रामो य इमां मत्तकाशिनीम् । विना सीतां महाबाहुर्मुहूर्तमपि जीवति ॥' इति च ॥ नहि नहि । परिणयप्रसक्तिरप्यनिष्टेति द्विरुक्त्या व्यज्यते ॥ इदानीमसि त्वम् ॥ 'स्वापहेतुरनुपाश्रितोऽन्यया' इत्युक्तरीत्या एकदारव्रतत्वं तवेदानीमेव प्रकटितमिति भावः । परित्याग एव शल्यं परित्यागशल्यम् । निष्कारणपरित्यागस्य प्रत्यवायहेतुत्वप्रयुक्तदुःखजनकत्वाच्छल्यत्वरूपणम् । ननु वास्त-

रामः—वत्साणि तावद्बाष्पदिग्धं चक्षुर्विनोदयामि ।

सीता—धण्णा खु सा जा एव्वं अज्जउत्तेण बहुमण्णीअदि । जा अ अज्जउत्तं विणोदयन्दी आसाणिबन्धणं जादा जीअलोअस्स । ( क )

तमसा—( सस्मितस्नेहास्रं परिष्वज्य । ) अयि वत्से एवमात्मा स्तूयते ।

सीता—( सलज्जमधोमुखी स्वगतम् ) परिहसिदह्मि भअवदीए । ( ख )

वासन्ती—महानयं व्यतिकरोऽस्माकं प्रसादः । गमनं पुनर्यथा कार्यहानिर्न भवति तथास्तोम् ।

सीता—पडिऊला दाणिं मे वासन्दी संवुत्ता । ( ग )

तमसा—वत्से एहि गच्छावः ।

---

( क ) धन्या खलु सा यैवमार्यपुत्रेण बहुमन्यते । या चार्यपुत्रं विनोदयन्त्याशानिबन्धनं जाता जीवलोकस्य ।

( ख ) परिहसितास्मि भगवत्या ।

( ग ) प्रतिकूलेदानीं मे वासन्ती संवृत्ता ।

---

इति चेन्मैवम् । अग्निप्रवेशादिना मिथ्याभिशस्तेरनवकाशात् । उत्खातितमुद्धतम् ॥ तत्रापि हिरण्मयसीताप्रतिकृतौ बाष्पदिग्धमश्रुणा लिप्तम् । विनोदयामि विस्मृतदुःखं करोमि । एवं च सीताप्रतिकृतेरश्वमेधसहधर्मचारिणीत्वमानुषङ्गिकम् । मुख्यं तु चक्षुर्विनोदनमिति सूचितम् । यैवं बहुमन्यते चक्षुर्विनोदहेतुत्वप्रयुक्तबहुमानविषयीक्रियते सा प्रतिकृतिर्धन्या यैवमार्यपुत्रं विनोदयन्ती विस्मृतदुःखं कुर्वन्ती जीवलोकस्याशाबन्धनं रामजीवनप्रत्याशाहेतुत्वात्स्वस्वविषयकाशाहेतुर्जाता सा धन्येत्यन्वयः ॥ परिष्वज्यालिङ्गय । एवं 'धन्या खलु सा' इत्यादिपूर्वोक्तरीत्या आत्मा स्तूयते स्तुतिविषयीक्रियते । त्वयेति शेषः ॥ भगवत्या । तमसयेत्यर्थः ॥ अयं व्यतिकर एष समागमः । अस्माकं महान्प्रसादः । अस्मद्विषयानुग्रहप्रयोजित इत्यर्थः । यथा येन प्रकारेण कार्यस्य कर्तव्यस्य हानिर्लोपो न भवति तथा तेन प्रकारेण गमनं पुनि गमनोद्देशेन कार्यं यत्नः कर्तव्यः । इदानीं वासन्ती मे प्रति-

... यस्यास्तव

प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः।
मर्मच्छेदपरैर्यत्नैराकर्षो न समाप्यते ॥ ४६ ॥

सीता—णमो णमो अपुव्वपुण्णजणिददंसणाणं अज्जउत्तचलणकमलाणम्। (इति मूर्च्छति) (ख)

तमसा—वत्से समाश्वसिहि समाश्वसिहि।

सीता—(समाश्वस्य।) किअच्चिरं वा मेहन्तरेण पुण्णिमाचन्दस्स दंसणम् (ग)

(क) एवं करिष्यावः।

(ख) नमो नमोऽपूर्वपुण्यजनितदर्शनाभ्यामार्यपुत्रचरणकमलाभ्याम्।

(ग) कियच्चिरं वा मेघान्तरेण पूर्णिमाचन्द्रस्य दर्शनम्।

एवं कुर्वः। गच्छाव इत्यर्थः॥ **यस्यास्तव प्रत्युप्तस्येवेति**। तृष्णया अवलोकनस्पृहया दीर्घस्य आयतस्य। दयिते रामे प्रत्युप्तस्येव स्थितस्य कीलितस्येव स्थितस्य यस्यास्तव चक्षुषो नेत्रस्य संनिकर्षो दयिते संबन्धः। मर्मच्छेदोपमैर्हृदयादिप्रदेशकृन्तनसदृशैर्यत्नैर्निरुद्ध्यते निवर्त्यते। तथाविधया त्वया कथं गम्यत इति पूर्वेणान्वयः। तृष्णादीर्घस्येत्युक्त्या दयिते प्रत्युप्तस्येवेति दयितपदविवक्षितरामस्यामृतसादृश्यं व्यज्यते ॥ ४६ ॥ **नम इति**। प्राकृते चतुर्थीस्थाने षष्ठीद्विवचनस्य बहुवचनत्वम्। सुकृतानि पुण्यानि यैस्ते सुकृतपुण्याः। सुकृतपुण्याश्च ते जनाश्चेति विग्रहे कर्मधारयः। तथाविधैः दर्शनीयाभ्यां सेवितुं शक्याभ्याम्। न तु मादृशपापकृज्जनदर्शनार्हाभ्यामित्यर्थः। 'न ते मनुष्या देवास्ते ये चारुशुभकुण्डलम्' इत्यादि दशरथोक्तरीत्या पुण्यकृद्दर्शनीयत्वं रामचरणयोरिति भावः। 'ममैव दुष्कृतं किंचिन्महदस्ति न संशयः' इत्युक्तरीत्या स्वस्याः पापकृत्त्वमिति तात्पर्यम्। अत्र सुष्ठुकृतं यैस्ते सुकृताः। तथाविधाश्च ते पुण्यजना राक्षसाश्चेति ते विभीषणादयः इति कश्चित्। उक्तरीत्याश्रयणे कृतस्यापि संग्रह इति धिक्। इति मूर्च्छामभिनयति॥ कियच्चिरं मेघान्तरेण पूर्णचन्द्रदर्शनं मेघमध्ये पूर्णचन्द्रदर्शनम्। 'वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते' इत्यौत्सर्गिकस्य शृङ्गारवीरान्यतरप्राधा-

१ मर्मच्छेदोपमैर्यत्नैः संनिकर्षो निरुध्यते. २ णमो सुकिदपुण्णजणदंसणिज्जाणं ...नदर्शनीयाभ्याम्): अकिदपुण्णजणा...

एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक्पृथगिवाश्रयते विवर्तान् ।
आवर्तबुद्बुदतरङ्गमयान्विकारा-
नम्भो यथा सलिलमेव तु तत्समग्रम् ॥ ४७ ॥

---

न्यस्य वीरशृङ्गारौ प्रायिकावित्यपवादेऽपि करुणरसप्राधान्यं प्रकरणे माना-भावः । रसान्तराणां सत्वात् । न ह्यत्र विनिगमकमस्ति • येन करुणरसस्य प्राधान्यमुपपद्यते । किंच करुणस्य दुःखात्मकत्वेन रसत्वं नास्ति । येन रसप्र-धाननाटके तस्योक्तिसंभवः स्यादिति शङ्कां कविस्तमसावाक्यव्याजेन परिहरति । **अहो संविधानकमिति** । अपूर्वरूपकनिर्माणं विस्मयनीयमित्यर्थः । **एक इति** । रस्यते स्वाद्यत इति रसः काव्यानुशीलिनाभ्यासवशविशदीभूतवर्ण-नीयतन्मयीभवनयोग्यसामाजिकमनोमुकुरैर्भाव्यमानतया निर्भरानन्दसंविद्रूपः । करुण इष्टजनवियोगजन्यदुःखातिशयः । एक एव सन्नपि निमित्तभेदात् व्यञ्जकविभावादिविच्छित्तिविशेषाद्भिन्नः विलक्षणः पृथक्पृथग्विवर्तान् परस्पर-विलक्षणशृङ्गाराद्यात्मना परिणामान् । 'व्यत्यस्तपरिणामः स्याद्विवर्तः' इति कपिलः । श्रयते भजते । एकस्यानेकधा विकारमात्रे दृष्टान्तमाह—आवर्तेति । आवर्तः जलस्य भ्रमः, बुद्बुदः कुड्मलाकारजलसंस्थानविशेषः, तरङ्गः भङ्गः, एतद्रूपान्विकारान् । अवस्थान्तराणीत्यर्थः । तत्समस्तमावर्तादिकं सर्वं सलि-लमेव जलमेव । तरङ्गादीनां जलविवर्तत्वाभावाद्विकारमात्रे दृष्टान्तमिदम् । अत एव विवर्तानित्युक्तिः इदमत्र कवेर्मतम्—'यद्यपि शृङ्गार एक एव रस इति शृङ्गारप्रकाशकारादिमतम्, तथापि प्राचुर्याद्रागिविरागिसाधारण्यात्करुण एक एव रसः । अन्ये तु तद्विकृतयः' इति । करुणस्यानुकार्ये रामादौ दुःख-रूपत्वेऽपि सहृदयमानन्दात्मना परिणमतीत्युक्तरीत्या सामाजिके आनन्दरूप-त्वमेव । तर्हि भावकानां करुणात्मककाव्यश्रवणे अश्रुधाराविर्भावः कथमिति चे-दत्राहुः—संभोगसमये स्त्रीणामधरदंशनादौ कृत्रिमदुःखानुभवसीत्कारवदत्राप्युप-पत्तिः । सुखेऽपि दुःखवदुपचारः कुट्टमितं तल्लक्षणात् । यद्यस्य सहजदुःखात्मकत्वं स्यात् न कोऽपि सामाजिकस्तत्र प्रवर्तेत ततश्च करुणैकरसानां रामायणादी-नामुच्छेदप्रसङ्गः स्यात् । तस्माद्रसान्तरवत्करुणस्याप्यानन्दात्मकत्वमेवेति । एवं च रसान्तरापेक्षया प्रकृतित्वमेव करुणस्य प्राधान्ये विनिगमकं शृङ्गारवीरयोः-प्रायिकत्वोक्तिस्तदभावे अस्यैवोचितत्वादिति । यद्वा एको रसः रसशब्दवाच्यः । अत्र ओदनं पचति अस्य सूत्रस्य पटो वातव्यः इत्यादाविव भाविनीं वृत्ति-माश्रित्य रसशब्दप्रयोगः । एवम् 'पुटपाकप्रतीकाशो रामस्य करुणो रसः'

तमसावासन्त्यौ—( सीतारामौ प्रति । )

अवनिरमरसिन्धुः सार्धमस्मद्विधाभिः
स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता ।
स च मुनिरनुयातारुन्धतीको वसिष्ठ-
स्त्वयि वितरतु भद्रं भूयसे मङ्गलाय ॥ ४८ ॥

( इति निष्क्रान्ताः सर्वे । )

तृतीयोऽङ्कः ।

---

एक एव सन्नपि निमित्तभेदात्सखित्वपतित्वपत्नीत्वाद्युपाधिभेदाद्भिन्नः विलक्षण इव पृथक्पृथग्विवर्तान् श्रयते । वासन्तीसीतारामप्रभृतिषु परस्परविलक्षणावस्थाविशेषान्भजति । अत्र विवर्तशब्दो विकारमात्रपरः । एवं दृष्टान्तसामञ्जस्यमुपपद्यते । शेषं पूर्ववत् । अस्मिन् पक्षे रसान्तररसत्वे करुणारसप्राधान्यं तूक्तयुक्त्या ग्रन्थाद्बहिः समर्थनीयम् । तथाचैतादृशकरुणरसप्रधानत्वादपूर्वोऽयं कथासंनिवेश इति पूर्वेणान्वयः ॥ ४७ ॥ तमसावासन्त्यौ सीतारामौ प्रति यथासंख्यं प्रति उद्दिश्य । **अवनिरिति** । अवनिर्भूमिः । अमरसिन्धुः गङ्गा । अस्मद्विधाभिः । तमसापक्षे मुरलागोदावरीप्रभृतिभिरित्यर्थः । वासन्तीपक्षे अन्याभिर्देवताभिः सहेत्यर्थः । यश्छन्दसां प्रयोक्ता वेदानां प्रवक्ता आद्यः कुलपतिः स च सूर्यश्च । मुनिर्मननशीलः स प्रसिद्धः । अनुयातानुगता अरुन्धती यमिति विग्रहे द्वितीयाबहुव्रीहिः । शेषाद्विभाषेति कप् । न कपीति ह्रस्वप्रतिषेधः । तथाविधो वसिष्ठः । तव भूयसे प्रचुराय मङ्गलाय भद्रं मङ्गलं वितरतु ददातु । अत्र गर्भबीजस्य श्रेयोवितरणरूपस्योद्भेदनादाक्षेपो नाम संध्यङ्गमुक्तं भवति । 'यदत्रोच्छृङ्खलं किंचित्कविनानेन बध्यते । निरङ्कुशतया तत्तु समाधेयं मनीषिभिः ॥ भावस्य तु गभीरत्वात्स कश्चिदिह कथ्यते । कोशव्याकरणे प्रायेणोज्झ्येते ग्रन्थगौरवात् ॥ ४८ ॥

वाधूलवंशजनुषो भूसारनिवासराघवार्यस्य ।
उत्तररामचरित्रव्याख्यायामवसितस्तृतीयोऽङ्कः ॥

इति श्रीवाधूलवीरराघवविरचितायां भवभूतिभावतलस्पर्शिनीसमाख्यायामुत्तररामचरितव्याख्यायां

तृतीयोऽङ्कः ।

एकः—सौधातके दृश्यतामद्य भूयिष्ठसन्निधापितातिथिजनस्य समधिकारम्भरमणीयता भगवतो वाल्मीकेराश्रमपदस्य । तथाहि ।

नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूताप्रिया-
पीतादभ्यधिकं तपोवनमृगः पर्याप्तमाचामति ।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥ १ ॥

---

**तत इति** । तापसौ तपःशीलौ । एकः । तयोरन्यतर इत्यर्थः । सुधातुरपत्यं सौधातकिः । 'सुधातुरकङ् च' इत्यकङादेशोऽञ्प्रत्ययः । तस्य संबुद्धिः सौधातके इति । अद्य मध्याह्ने भूयिष्ठं यथा भवति तथा सन्निधापितः निकटागामितः अतिथिजनो यस्मिन्निति तथोक्तस्य भगवतो वाल्मीकेः ज्ञानशक्त्यादिपूर्णस्य प्राचेतसस्य यदाश्रमपदं आश्रमस्थानं तस्य समधिकारम्भेण प्रचुरतरमारभ्यमाणातिथिजनसत्कारादिना रमणीयता हृद्यता दृश्यतां चक्षुर्विषयीक्रियताम् । त्वयेति शेषः । **नीवारेति** । तपोवनमृगः तपोवनाश्रयो मुनिसंवर्धितहरिणः । सद्यः समानेऽह्नि । तस्मिन्दिन इत्यर्थः । प्रसूता प्रसववती । कर्तरि क्तः । तथाविधया प्रियया प्रियविषयहरिण्या पीतात् पानं प्राप्य । भावे क्तः । ल्यब्लोपे पञ्चमी । अभ्यधिकं अवशिष्टं प्रचुरं वा हरिणीकर्तृकं वा पानं प्राप्यापि प्रचुरमित्यर्थः । उष्णं च तत् मधुरं च माधुर्ययुक्तं चेति विशेषणसमासः । तथाविधं नीवारौदनमण्डं नीवारो धान्यविशेषः । तत्संबन्ध्यौदनस्य यन्मण्डं घनीभूतद्रवविशेषः तत्पर्याप्तं यावदिच्छानिवृत्ति आचामति पिबति । यद्वा सद्यःप्रसूताप्रियापीतादिति हेतौ पञ्चमी । सद्यःप्रसूतप्रियाकर्तृकपानाद्धेतोः अभ्यधिकं यथा भवति तथा प्रचुरं यथा भवति तथा उष्णं मधुरं चेत्यर्थः । अत्र सद्यःप्रसूतत्वमुष्णत्वे हेतुः । उष्णत्वं हि प्रसवविह्वलशरीरतोदपरिहारकम् । प्रियात्वं च मधुरत्वे हेतुः अत एव मधुरत्वोक्तिः प्रयोजनवती । अन्यथा तस्य माधुर्याव्यभिचारात्तद्वैयर्थ्यं स्पष्टमेव । इदमेवाभिसंधाय 'अम्बुनीवारशष्पैः' इत्यत्र अम्बुना तरून् अम्बुनीवाराभ्यां शकुनीन् अम्बुनीवारशष्पैः कुरङ्गानिति विवेक उक्त इति बोध्यम् । अत एव पर्याप्तं यावदिच्छानिवृत्ति आचामति पिबति । सर्पिष्मतः घृतवतः भक्तस्यान्नस्य स्फुरता प्रसरता गन्धेन सौरभ्येण मनागीषदनुसृतः अनुगतः कर्कन्धूफलमिश्रस्य बदरीफलमिश्रस्य शाकपचनस्य पच्यमानशाकस्य । बदरीफलानि हि आम्लरसार्थं शाकेन सह

सिदा। अज्ज एव्व पज्जागदस्स राएसिणो जणअस्स भअवदा वम्मीइणा धहिमहूहिं एव्व णिव्वत्तिदो महुवक्को। वच्छदरी उण विसज्जिदा। (क)

दण्डायनः—अनिवृत्तमांसानामेवं कल्पमृषयो मन्यन्ते। निवृत्तमांसस्तु तत्रभवान् जनकः।

सौधातकिः—किंणिमित्तम्। (ख)

दण्डायनः—स तदैव देव्याः सीतायास्तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तः। तथास्य कतिपये संवत्सराश्चन्द्रद्वीपतपोवने तपस्तप्यमानस्य।

सौधातकिः—तदो किंति आअदो। (ग)

दण्डायनः—चिरंतनप्रियसुहृदं भगवन्तं प्राचेतसं द्रष्टुम्।

सौधातकिः—अवि अज्ज संबन्धिणीहिं समं संवुत्तं से दंसणं णवेत्ति। (घ)

---

(क) येनागतेषु वसिष्ठमिश्रेषु वत्सतरी विशसिता। अद्यैव पर्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिना दधिमधुभ्यामेव निर्वर्तितो मधुपर्कः। वत्सतरी पुनर्विसर्जिता।

(ख) किंनिमित्तम्।

(ग) ततः किमित्यागतः।

(घ) अप्यद्य संबन्धिनीभिः समं संवृत्तमस्य दर्शनं नवेति।

---

सि॥ आगतेष्वेवेति। मिश्रशब्दः पूज्यताद्योतकः। 'एवार्थे एव्व' इति प्राकृतसूत्रेण एव्वादेशः। दधिमधुभ्यामित्यनेन दधिमधुसंसृष्टमित्यापस्तम्बवचनमभिप्रेतम्। निर्वर्तितः निष्पादितः। वत्सतरी पुनरिति। विसर्जिता मुक्ता न त्वालब्धेत्यर्थः॥ व्याहरन्ति केचिदिति। केचिद्धर्मशास्त्रकारा आपस्तम्बादयः। एवं कल्पं मांसवर्जं मधुपर्कानुष्ठानप्रकारं व्याहरन्ति वदन्ति। निवृत्तमांसो वर्जितमांसः॥ स देव्या इत्यादि। वैखानसः वानप्रस्थः। चन्द्रद्वीपतपोवने तपस्तप्यमानस्य तपश्चरतः कतिपये संवत्सराः। गता इति शेषः। चन्द्रद्वीप इति कश्चिद्द्वीपविशेषः॥ प्राचेतसं वाल्मीकिम्॥ संबन्धिनीभिः दर्शनं निवृत्तं नवेति ज्ञायते अपीति योजना अपेः॥ अद्यम्।

दण्डायनः—सम्प्रत्येव भगवता वसिष्ठेन देव्याः कौसल्यायाः सकाशं भगवत्यरुन्धती प्रहिता यत्स्वयमुपेत्य वैदेहो द्रष्टव्य इति ।

सौधातकिः—जह एदे त्थविरा परप्परं मिलिदा तह अह्मे वि बडुहिं सह मिलिअ अणज्झाअमहूस्सवं खेलन्तो संभावेह्म । (इति परिक्रामतः ।) (क)

दण्डायनः—तदयं ब्रह्मवादी पुराणराजर्षिर्जनकः प्राचेतसवसिष्ठावुपास्य संप्रत्याश्रमस्य बहिर्वृक्षमूलमधितिष्ठति । य एष

हृदि नित्यानुषक्तेन सीताशोकेन तप्यते ।
अन्तःप्रसृमदहनो जरन्निव वनस्पतिः ॥ २ ॥

(इति निष्क्रान्तौ ।)

मिश्रविष्कम्भः ।

---

[ततः प्रविशति जनकः ।]

जनकः—

अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन्मर्माणि क्रकच इव मन्युर्विरमति ॥ ३ ॥

---

(क) यथैते स्थविराः परस्परं मिलितास्तथावामपि बटुभिः सह मिलित्वानध्यायमहोत्सवं खेलन्तौ संभावयावः ।

---

जनक इत्यर्थः । स्नेहाद्द्रष्टव्यः प्रेम्णा दर्शनीयः ॥ स्थविराः वृद्धाः । अनध्यायः अध्ययनाभावः स एव महोत्सवः । आनन्दहेतुत्वादुत्सवत्वरूपणम् ॥ उपास्य परिचर्य । हृदीति । य एषः । जनक इत्यर्थः । हृदि नित्यानुषक्तेन नित्यलग्नेन सीताशोकेन सीतानिमित्तदुःखेन तप्यते तप्तो भवति । जरन् वृद्धः अन्तः प्रज्वलद्वह्निः । वनस्पतिः पुष्पहीनफलवृक्षः ॥ २ ॥ मिश्रविष्कम्भः । संस्कृतप्राकृतात्मकविष्कम्भ इत्यर्थः ॥ अपत्य इति । यस्मात् अपत्ये । सीतायामित्यर्थः । तादृग्दुरितं कौलीनरूपपापं व्यसनं वाभवत् । तीव्रेणातिप्रचुरेण तेन दुरितेन व्यथयता दुःखं प्रापितेन व्रणितहृदयेन विषक्तः प्रसक्तः । पटुः तीक्ष्णः । धारया वहतीति धारावाही । अत्यन्तनैरन्तर्येण प्रवाहीत्यर्थः । चिरेणापि चिरकालेनापि नव इव स्थितः मर्माणि हृदयादीनि निकृन्तन् छिन्दन् क्रकच इव करपत्र इव स्थितः । मन्युः शोकः क्रोधो वा । न

तिभिस्तैर्विभिरात्तरसधातुरनवष्टम्भो नाद्यापि मम दग्धदेहः पतति ।
अन्धतामिस्रा ह्यसूर्या नाम ते लोकास्तेभ्यः प्रतिविधीयन्ते य आत्मघातिन इत्येवमृषयो मन्यन्ते । अनेकसंवत्सरातिक्रमेऽपि प्रतिक्षणपरिभावनास्पष्टनिर्भासः प्रत्यग्र इव न मे दारुणो दुःखसंवेगः प्रशाम्यति । अयि मातर्देवयजनसंभवे सीते ईदृशस्ते निर्माणभागः परिणतो येन लज्जया स्वच्छन्दमाक्रन्दितुमपि न शक्यते । हा पुत्रि

अनियतरुदितस्मितं विराज-
त्कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमञ्जुजल्पितं ते ॥ ४ ॥

---

विरमात न शाम्यति ॥ ३ ॥ जरया वयोहान्या । दुरासदेन । दुःसहेन दुःखेन सीताविश्लेषजेन । पराको द्वादशादिनोपवासमकृच्छ्रम्, सांतपनं चान्द्रायणविशेषः । एवमादिभिः कायशोषकनियमविशेषैः शोषितान्तःशरीरधातोर्मे कथमवष्टम्भ एव पातप्रतिबन्धकावलम्बनमेव । दग्धदेहः हतहृदयमितिवत् निन्दायां दग्धशब्दः । अद्यापि न पततीति योजना । अनेकसामग्रीसमवधानेऽपि पाताभावो विस्मयनीय इति भावः । तर्हि भृगुपतनादिना त्यज्यतामित्यत्राह—अन्धतामिस्रा इति । आत्मानं घ्नन्तीति आत्मघातिन इति विग्रहः । 'सुप्यजातौ' इति णिनिः । ये बलात्क्रियन्ते तेभ्यः तान् पातयितुं । क्रियार्थे चतुर्थी । असूर्याः सूर्यरहिता अन्धतमसमयास्ते प्रसिद्धा लोका नरकविशेषाः प्रेत्य मरणानन्तरे प्रतिविधीयन्ते इत्येवमृषयो मन्यन्ते । 'असूर्या नाम ते लोका अन्धेन तमसावृताः । तास्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥' इति श्रुतिः । इति धर्मशास्त्रकाराणां मतम् । प्रतिक्षणपरिभावनया संततविचारेण । 'भू अवकल्कने' । अवकल्कनं चिन्तनम् । स्पष्टनिर्भास विशदप्रकाशः । प्रत्यग्र इव नव्य इव न प्रशाम्यति न नश्यति । निर्माणभागः सृष्टिफलम् । येन निर्माणभागेनाक्रन्दितुमपि रोदितुमपि । अपिशब्दात्क्रियान्तरानर्हत्वं सूच्यते । दोषवादहेतुकत्वात्त्यागस्येति भावः । अनियतेति । अनियतरुदितस्मितं अव्यवस्थितरोदनहसनम् । विराजन्तः कतिपये त्रिचतुराः कोमला ललिता दन्ता एव कुड्मलाग्राणि यस्य तथोक्तम् । तेन कुड्मलाग्रशब्दस्य न पूर्वनिपातः न वा दन्तशब्दस्य दतादेशः । स्खलदपूर्णमसमञ्जसं पूर्वापरसंगतिरहितं मञ्जु सुन्दरं जल्पितं

भगवति वसुंधरे सत्यमतिदृढासि ।

त्वं वह्निर्मुनयो वसिष्ठगृहिणी गङ्गा च यस्या विदु-
र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः ।
विद्यां वागिव यामसूत भवती तद्वत्तु या दैवतं
तस्यास्त्वद्दुहितुस्तथाविशसनं किं दारुणेऽमृष्यथाः ॥५॥

( नेपथ्ये )

इत इतो भगवतीमहादेव्यौ ।

**जनकः**—( दृष्ट्वा ) अये गृष्टिनोपदिश्यमानमार्गा भगवत्यरुन्धती । ( उत्थाय ) कां पुनर्महादेवीत्याह । ( निरूप्य ) हा हा कथमियं महाराजदशरथस्य धर्मदाराः प्रियसखी मे कौसल्या । क एतां प्रत्येति सैवेयमिति[६] ।

---

वचनं यस्य तथोक्तं ते वदनकमलकं वदनमेव कमलम् । अनुकम्पायां कन् । स्मरामि उत्कण्ठापूर्वकं चिन्तयामि । अत्रानियतरुदितस्मितं स्खलदसमञ्जसमिति विशेषणानुगुण्याद्वदनकमलकमित्यत्र परिणामालंकारः । केवलकमलस्य प्रकृतक्रियान्वयित्वानुपपत्तेः । 'परिणामः क्रियार्थश्चेद्विषयी विषयात्मना' इति लक्षणात् । दन्तकुड्मलाग्रमित्यत्रापि क्रियान्वयविवक्षायां परिणामो रूपकं वा ॥ ४ ॥ **भगवतीति** । अतिदृढासि अतिकठिनासीति सत्यम् । अत्र 'यो वा बिभर्ति काठिन्यं तस्मै भूम्यात्मने नमः' इति वचनं द्रष्टव्यम् । तव वसुंधरात्वप्रयुक्तधैर्येण पुत्रीनाशोऽप्यकिंचित्कर एवेत्युपालम्भो व्यज्यते । **त्वमिति** । यस्याः सीताया माहात्म्यममानुषत्वं त्वं वेत्थ । विदुरित्यस्य विभक्तिवचनयोर्विपरिणामेन योजना । वह्निर्वेदमुनयो विदुः, वसिष्टगृहिणी अरुन्धती वेद जानाति गङ्गा च वेद जानाति । यदि वा किंच रघोः कुलगुरुः रघुवंशजनकस्तदाचार्यो वसिष्ठो वा । देवः दीप्तशीलः भास्करः स्वयं वेद परानपेक्षं जानाति । अत्र भुम्यादीनामन्योन्यनिरपेक्षप्रामाण्यप्रतिपत्यर्थं क्रियैकशेषाकरणाद्विदुरित्यत्र न मध्यमपुरुषः प्रयुक्तः । अत एव पुरुषवचनविपरिणामेन भिन्नानि वाक्यानि । यां प्रसूतवती तस्यास्तथाविधायाः पुनः शुद्धिं गतायाः । अग्निप्रवेशादित्यर्थः । त्वद्दुहितुः सीतायास्तथा विशसनमन्यादृशहिंसनं किममृष्यथाः कथं सोढवत्यसि ॥ ५ ॥ गृष्टिः दशरथकञ्चुकी तेन ।

श्रीरेव वा किमुपमानपदेन सैषा ।
कष्टं बतान्यदिव दैववशेन जाता
दुःखात्मकं किमपि भूतमहो विपाकैः ॥ ६ ॥
य एव मे जनः पूर्वमासीन्मूर्तो महोत्सवः ।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम् ॥ ७ ॥

( ततः प्रविशत्यरुन्धती कौसल्या कञ्चुकी च । )

अरुन्धती—ननु ब्रवीमि द्रष्टव्यः स्वयमुपेत्यैव वैदेह इत्येषै वः कुलगुरोरादेशः । अत एव चाहं प्रेषिता । तत्कोऽयं पदे पदे महाननध्यवसायः ।

कञ्चुकी—देवि संस्तभ्यात्मानमनुरुध्यस्व भगवतो वसिष्ठस्यादेशमिति विज्ञापयामि ।

कौसल्या—ईरिसे काले मिहिलाहिवो मए दिट्ठव्वो त्ति समं ज्जेव सव्वाहि दुःखाई समुब्भवन्ति । ता ण सक्कुणोमि उव्वट्टमाणमूलबन्धणं हिअअं पज्जवत्थावेदुम् । ( क )

( क ) ईदृशे काले मिथिलाधिपो मया द्रष्टव्य इति सममेव सर्वाणि दुःखान्युद्भवन्ति । तस्मान्न शक्नोम्युद्वर्तमानमूलबन्धनं हृदयं पर्यवस्थापयितुम् ।

[illegible] प्रसिद्धौ । न कोऽपीत्यर्थः । आसीदिति । इयं कौसल्या दशरथस्य गृहे श्रीरिवासीदथवा श्रीरेवासीत् । उपमानत्वबोधकयथाशब्देन किम् । न किमपीत्यर्थः । अत्रोपमालंकारो रूपकालंकार आक्षेपालंकारश्च । सैषा श्रीसदृशी श्रीभूता वा इयं कौसल्या दैववशेन दैवेच्छया अन्यदिव जातान्यद्भूतमिव संवृत्ता । अलक्ष्मीरिव जातेत्यर्थः । अत्रेवेति वर्तते । दुःखात्मकं दुःखैकरसं किमपि वाचामपरिच्छेद्यं भूतं प्राणिविशेषः जाता । साक्षादलक्ष्मी[illegible]तेत्यर्थः । यथा श्रीः श्रीरेव वेत्यनयोः प्रतिद्वन्द्वभूतमिदमहो विकारः प्राणि[illegible]सुपचयापचयरूपागन्तुको विस्मयनीय इत्यर्थः । कष्टं बतेति दुःखातिशये ॥ ॥ ६ ॥ य इति । य एष जनः कौसल्या ॥ ७ ॥ आदेशः आज्ञा । अनध्यवसायः संशयः ॥ आत्मानं धृतिम् । संस्तभ्य प्रतिहतगतिं कृत्वा । अनुरुध्यस्वानुतिष्ठेत्यर्थः ॥ समं युगपत् । अवतरन्ति प्राप्नुवन्ति । उद्वर्तमानमुद्[illegible]

अरुन्धती—अत्र कः संदेहः ।

संतानवाहीन्यपि मानुषाणां
दुःखानि सद्बन्धुवियोगजानि ।
दृष्टे जने प्रेयसि दुःसहानि
स्रोतःसहस्रैरिव संप्लवन्ते ॥ ८ ॥

कौसल्या—कहं णु खु वच्छाए वहूए एवं गदे तस्स राएसिणो मुहं दंसह्म । ( क )

अरुन्धती—

एष वः श्लाघ्यसंबन्धी जनकानां कुलोद्वहः ।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥ ९ ॥

कौसल्या—एसो सो महाराअस्स हिअआणन्दो वच्छाए वहूए पिदा राएसी । हद्धी हद्धी सुमोरिदह्मि अणिव्वेदरमणीए दिवहे । हा देव्व सव्वं तं णत्थि । ( ख )

( क ) कथं नु खलु वत्साया वध्वा एवंगते तस्य राजर्षेर्मुखं दर्शयामः ।

( ख ) एष स महाराजस्य हृदयानन्दो वत्साया वध्वाः पिता राजर्षिः । हा धिक् हा धिक् स्मारितास्मि अनिर्वेदरमणीयान्दिवसान् । हा दैव सर्वं तन्नास्ति ।

स्थापयितुम् ॥ संतानेति । संतानेन अविच्छेदेन वाहीनि प्ररूढान्यपि दुःखानि प्रेयसि जने दृष्टे सतीत्यन्वयः । स्रोतःसहस्रैरनन्तैः स्रोतोभिः । उपलक्षणे तृतीया । संप्लवन्ते महोर्मीभवन्ति ॥ ८ ॥ वध्वाः स्नुषायाः । एष इति । यस्मै यं जनकं सार्थयितुम् । 'क्रियार्थो—'इति चतुर्थी । ब्रह्मपारायणं स्वरूपेण गुणैश्च अनवधिकाशयब्रह्मत्वयुक्तपरमात्मप्रतिपादकवेदान्तभागं जगौ उपदिदेश । स एष इति योजना ॥ ९ ॥ हृदयनिर्विशेषः । अन्तरङ्ग इत्यर्थः । सीरः ध्वजे यस्य तथोक्तः । अनिर्वेदाश्च ते रमणीयाश्च । न विद्यते निर्वेदश्चित्तग्लानिर्येषु तथोक्ताः । रमणीया आनन्दहेतवः तथाविधा-

जनकः—(उपसृत्य) भगवत्यरुन्धति वैदेहः सीरध्वजोऽभिवादयते।

यया पूतंमन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः।
त्रिलोकीमाङ्गल्यामवनितललीनेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम्॥ १०॥

अरुन्धती—परं ते ज्योतिः प्रकाशताम्। स त्वां पुनातु देवः परोरजसां य एष तपति।

जनकः—आर्य गृष्टे अप्यनामयमस्याः प्रजापालकस्य मातुः।

कञ्चुकी—(स्वगतम्) निरवशेषमतिनिष्ठुरमुपालब्धाः स्मः। (प्रकाशम्) राजर्षे अनेनैव मन्युना चिरपरित्यक्तरामभद्रमुखचंद्रदर्शनां नार्हसि दुःखयितुमतिदुःखितां देवीम्। रामभद्रस्यापि दैवदुर्योगः कोऽपि। यत्किल समन्ततः प्रवृत्तबीभत्सकिंवदन्तीकाः पौरजानपदा नाग्निशुद्धिमनल्पकाः प्रतीयन्तीति दारुणमनुष्ठितं देवेन।

---

वयतीत्यर्थः॥ ययेति। पूतंमन्यः आत्मविषयकपूतत्वप्रकारकज्ञानवान्। त्रिलोकीमाङ्गल्यां लोकत्रयमङ्गलहेतुभूतामुषसमिव प्रातःसंध्यादिदेवतामिव स्थिताम्। अवनितललीनेन शिरसेत्युपलक्षणमष्टाङ्गप्रणामस्य॥ १०॥ अक्षरं प्रकृतिपुरुषवरस्वरूपस्वभावविकाररहितं ज्योतिः स्वयंप्रकाशं प्रकाशतां प्रतिभासताम्। अक्षरमम्बरान्तधृतेर्ज्योतिश्चरणाभिधानादित्यधिकरणद्वयार्थः। प्रत्यभिज्ञापितः। देवः जगत्सृष्ट्यादिलीलावान्। रजसां समस्तदोषजातेभ्यः परः। संबन्धसामान्ये षष्ठी। 'परोरजाः' इति वा पाठः। रजसः पर इति विग्रहः। बाहुलकात्समासः। पृषोदरत्वादोकारश्च। य एष तपति स त्वां पुनातु। अनेन अन्तस्तद्धर्मोपदेशादित्यधिकरणार्थः सूचितः। परोरजसामित्यनेन 'उदेति ह वै सर्वेभ्यः पाप्मभ्यः' इतिश्रुतिश्चोदिता॥ अनामयमारोग्यम्। प्रजापालकस्य मातुः राममातुः कौसल्यायाः। इदं च साभिप्रायम्। अनामयमित्यनेन एवं दुःखिनी कियच्चिरं जीवयिष्यतीत्युपालम्भो व्यज्यते॥ निरवशेषं निःशेषमतिनिष्ठुरं अतिरूक्षम्। अनेनैव मन्युना 'अप्यनामयं प्रजापालकस्य मातुः' इत्यनेन व्यज्यते न क्रोधेन। दैवस्य भवितव्यतायाः दुर्योगः दुःखजननसंबन्धः। यत्किल यस्माद्धेतोः प्रवृत्ता प्रसृता बीभत्सा जुगुप्सनीया किंवदन्ती

कष्टमेवंवादिना जनेन रामभद्रपरिभूता अपि वयं पुनः परिभूयामहे ।

**अरुन्धती**—(निश्वस्य ।) एवमेतत् । अग्निरिति वत्सां प्रति परिलघून्यक्षराणि । सीतेत्येव पर्याप्तम् । हा वत्से

> शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
> विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति ।
> शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतां
> गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥११॥

**कौसल्या**—अहो उम्मीलन्ति वेअणाओ । (इति मूर्च्छति)

**जनकः**—हा कष्टं किमेतत् ।

**अरुन्धती**—राजर्षे किमन्यत् ।

---

(क) अहो उन्मीलन्ति वेदनाः ।

---

भवाः । तस्माद्दैवदुर्योगः कोऽपीति पूर्वेणान्वयः । अनल्पकाः अत्यल्पाः ॥ अग्निशुद्धिं न च प्रतीयन्ति न विश्वसन्ति च । इति पूर्वोक्ताद्धेतोः । दारुणं परित्यागात्मकं रौक्ष्यम् ॥ अग्निशुद्धिरिति क इति योजना । प्रस्ताव इति शेषः । एवंवादिना अग्निशुद्धिरिति वादिना जनेन परिभूयामहे अवमन्यामहे । उप॰ सर्गवशेन भवतेः कर्मणि लकारः ॥ एतत्परिभूयामहे इत्येतत् । एवं जनको॰ क्तदशासद्भाव एव । लघून्यक्षराणि लाघवापादकशब्दाः । सीतेत्येव पर्याप्तम् । वह्निसीतयोः पावनत्वे समकक्ष्यत्वात्प्रत्युत सीतायाः प्रकर्षात्सीताशब्द एव परिपूर्ण इति भावः । **शिशुरिति** । त्वं मम शिशुर्वा शिष्या वासीति यत् तत्तिष्ठत्विति योजना । विशुद्धेः निर्दोषतायाः उत्कर्षः अतिशयः । तथा भक्तिं मन्यादृशीं पूजनीयत्वप्रतिपत्तिं त्वयि मम द्रढयति स्थिरां करोति । शिशुत्वं स्त्रैणं स्त्रीत्वं वा । 'स्त्रीपुंसाभ्यां नञ्स्नञौ' इति नञ्प्रत्ययः । भवतु स्यात् । न तु तावता वन्द्यात्वहानिः । जगतां वंद्यासि अभिवादनीयासि । नन्वित्यवधारणे । गुणाः गुणिषु अहिंसाशौचमस्तेयमित्याद्युक्तगुणवत्सु पूजा॰ स्थानमन्वयव्यतिरेकाभ्यां पूजाप्रयोजकाः । लिङ्गं यज्ञोपवीतादिकं न पूजाप्रयो॰ जकम् ॥ ११ वेदना दुःखानि । समुन्मीलयन्ति मूलमुत्पाटयन्ति । इति मूर्च्छति मूर्च्छामभिनयति ॥ हन्त किमेतत् । शस्त्राभिघातादिकमन्तरा मूर्च्छा

स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम् ।
विपाके घोरेऽस्मिन्नथ खलु विमूढा तव सखी
पुरंध्रीणां चित्तं कुसुमसुकुमारं हि भवति ॥ १२ ॥

जनकः—हन्त हन्त सर्वथा नृशंसोऽस्मि संवृत्तः । यश्चिरस्य दृष्टान्प्रियसुहृदः प्रियदारान्न स्निग्धं पश्यामि ।

स संबन्धी श्लाघ्यः प्रियसुहृदसौ तच्च हृदयं
स चानन्दः साक्षादपि च निखिलं जीवितफलम् ।
शरीरं जीवो वा यदधिकमतोऽन्यत्प्रियतरं
महाराजः श्रीमान्किमिव मम नासीद्दशरथः ॥ १३ ॥

कष्टमियमेव सा कौसल्या ।

---

**राजेति** । स राजा तत्सौख्यं स च शिशुजनस्ते च दिवसा इति यत्तदखिलं सुहृदि त्वयि दृष्टे सति स्मृतावाविर्भूतं कस्याप्यंशस्य प्रतोधेण स्मृतिविषयीभूतम् । 'सदृशा दृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इत्युक्तेः । घोरे भयंकरे अस्मिन्विपाके प्रकृतसीतात्यागरूपदैवपर्यवसाने तव सखी कौसल्या विमूढा नेति । अप्यनामयमस्या इत्यादिभवद्वचनभङ्ग्या विक्षोभो भवन्मतरीत्या योऽस्याः कठिनचित्तताप्रयुक्तमूर्च्छाभावो वा नेत्यर्थः । पुरंध्रीणां चित्तं हि यस्मात्कुसुमवन्मृदु तस्माद्विमूढानेति न ॥ २ ॥ एवमरुन्धत्या बोधितोऽनुतपति—**हन्तेति** । योऽहं चिरस्य दृष्टान् चिराद्दृष्टान्प्रियसुहृदो दशरथस्य प्रियान्मत्प्रीतिविषयान्मयि प्रीतियुक्तान् हि दारान् कौसल्याम-स्निग्ध इव शत्रुरिव पश्यामि शत्रुकर्तृकदर्शनसदृशदर्शनवानस्मि । सोऽहं सर्वप्रकारेण क्रूरोऽस्मि हन्त अनुतप्यते । **स संबन्धीत्यादि** । श्रीमान् लक्ष्मीवान्महाराजः सार्वभौमः स दशरथः मम श्लाघ्यः संबन्धी अभूत् । असौ संबन्धिभूतो दशरथः प्रियसुहृदभूत् प्रीतिमान् शोभनहृदयवांश्चाभूत् । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति हृदयशब्दस्य हृदादेशः । तदन्तरङ्गत्वेन प्रसिद्धं हृदयं चाभूत् । चकारेण संबन्धिसुहृत्त्वसमुच्चयः । तदिति दशरथपरं विधेयप्राधान्यात्क्लीबत्वम् । एवं च तत् संबन्धिसुहृद्भूतदशरथः हृदयं चाभूदिति वा । स पूर्वोक्तत्रयात्मा दशरथः साक्षादानन्दश्च । साक्षाच्छब्देनानन्दहेतावानन्दत्वारोपो व्यावर्तते । साक्षान्मुख्य इत्यर्थः । निखिलं जीवितफलमपि च कर्मज्ञानभक्तिरूपं जीवनप्रयोजनं च । चकारः पूर्वसमुच्चायकः । शरीरमथ लैभो मानुषो देह इत्युक्तशरीरं चाभूत् । सकलधर्म-

यदस्याः पत्युर्वा रहसि परमं दूषितमभू-
 द्भूवं दम्पत्योः पृथगहमुपालम्भविषयः ।
प्रसादे कोपे वा तदनु मदधीनो विधिरभू-
 दलं वा तत्स्मृत्वा दहति यदवस्कन्द्य हृदयम् ॥ १४ ॥

अरुन्धती—हा कष्टम् । अतिचिरनिरुद्धनिःश्वासनिष्पन्दं हृदयमस्याः ।

जनकः—हा प्रियसखि । ( इति कमण्डलूदकेन सिञ्चति । )

कञ्चुकी—

सुहृदिव प्रकटय्य सुखप्रदः
 प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणो
 विधिरहो विशिनष्टि मनोरुजम् ॥ १५ ॥

---

साधनत्वाज्जीवो वाभूत् । जीवश्च भूत्तस्य हि ज्ञानानन्दमयत्वात्प्रेमास्पदत्वमतो जीवादधिकं समस्तकल्याणगुणामृतोदधित्वेनानन्दमयत्वेन च प्रकृष्टं प्रियतरं प्रियो जीवः प्रियतरं ब्रह्म तथाविधं यत्परं ब्रह्म तदभूत् । यत एवं ततः किं नाभूत् । सर्वमप्यभूदित्यर्थः । लोके संबन्धिसुहृदादीनां तत्तन्मात्रत्वमस्य तु सर्वदा सर्वविधत्वमिति भावः ॥ १३ ॥ यदस्या इति । अस्या वा पत्युर्दशरथस्य वा यत्परमं ज्ञायितमभूद्रहसि शुभभाषणं विचारो वा जातः । आचारणिजन्तात्कर्तरि क्तः । तत्राहं दम्पत्योर्जायापत्योः पृथगुपालम्भविषयोऽभूवं परस्परपरिहारेण परस्परविषये अयमेवमुक्तवानयमेवं कृतवानियमेवमुक्तवती इयमेवं कृतवतीत्यादिपरस्परापराधकथनपात्रमासम् । 'परमत्याहितमभूत्' इति पाठोऽपि दृश्यते । प्रणयकलहरूपजीवानापेक्षकमिति तदर्थः । शेषं पूर्ववत् । तदनु उपालम्भानन्तरं प्रसादानुष्ठानं कोपानुष्ठानं वा । मदधीनमभूदित्यर्थः । स्मृत्वालम् । तत्स्मरणेन साध्यं नास्तीत्यर्थः । यद्धृदयमवस्कन्द्याक्रम्य दहति भस्मीकरोति । तत्स्मृत्वालं । कोपप्रसादयोरन्यविषयत्वं च पाठद्वये क्रमाद्विवक्षितम् । तत्र हि परस्परोत्युक्तिरुपलक्षणार्थो ॥ १४ ॥ निरुद्धाः संचाररहिताः श्वासाः प्राणवायवो यस्मिन् तथोक्तं निष्पन्दं च ॥ सुहृदिति । विधिः प्रथममादौ सुहृदिव मित्रमिव सुखप्रदमेकरसामेकप्रकारामनुकूलतां योगक्षेमहेतुभूतां प्रकटय्य प्रकाशयित्वा पुनरन-

रामि दे[1] णवविवाहलच्छीपरिग्गहेक्कमण्डनं[2] पप्फुरन्तसुद्धविहासिदं[3] मुद्धमुहपुण्डरीअं। आप्फुरन्तचन्दचन्दिआसुन्दरेहिं अङ्गेहिं[4] पुणो वि मे जादे उज्जोएहि उच्छङ्गम्। सव्वहा महाराओ एव्वं भणादि। एसा रहुउलमहत्तराणं वहू अह्माणं दु जणअसुदा दुहिदेव्व।

**कञ्चुकी**—यथाह देवी।

> **पञ्चप्रसूतेरपि[6] तस्य राज्ञः**
> **प्रियो विशेषेण सुबाहुशत्रुः।**
> **वधूचतुष्केऽपि यथैव शान्ता**
> **प्रिया तनूजास्य तथैव सीता ॥ १६ ॥**

---

(**क**) हा वत्से जानकि कुत्रासि। स्मरामि ते नवविवाहलक्ष्मीपरिग्रहैकमंडनं प्रस्फुरच्छुद्धविहासितं मुग्धमुखपुण्डरीकम्। आस्फुरच्चन्द्रचन्द्रिकासुन्दरैरङ्गैः पुनरपि मे जाते उद्योतयोत्सङ्गम्। सर्वदा महाराज एवं भणति। एषा रघुकुलमहत्तराणां वधूरस्माकं तु जनकसुता दुहितैव।

---

सन्मनसो रुजं हृदयपीडां परिशिनष्टि परिशिष्टां करोति। अकाण्डनिवर्तनेन दारुणोऽकाण्डनिवृत्तो भूत्वेत्यप्याहुः। सुहृदपि त्यक्त्वा गतश्चेन्मनःपीडां करोतीति सम्यम् ॥ १५ ॥ नवविवाहलक्ष्म्याः परिग्रहेण एकं मुख्यं मङ्गलं यस्य तथोक्तम्। कौमुद्यां कृत्तिकापौर्णमास्यां भवश्चन्द्रः कौमुदीचन्द्रः। आरोहन्ती प्रादुर्भवन्ती या कौमुदी चन्द्रचन्द्रिका तद्वत्सुन्दरमङ्गं यस्यास्तथोक्ता। उत्सङ्गमङ्कमुद्योतय उपवेशेन प्रकाशय। सर्वदा सर्वस्मिन्काले महाराजो दशरथः। एषा सीता रघुकुले महत्तरा ये मनुप्रभृतयस्तेषां वधूः स्नुषा। जनकसुता सीता अस्माकं तु मम तु दुहितैव मदभिप्रायेण दुहितैवेत्येवं भणति ॥ देवी कौसल्या यथाह। तथैवेति शेषः। **पञ्चप्रसूतेरिति**। पञ्चप्रसूतयः पुत्रा यस्य तथोक्तस्य हि। तस्य राज्ञः पङ्क्तिरथस्य सुबाहुशत्रुः रामः विशेषेण प्रिय इष्टः। पञ्चप्रसूतयो यस्मिन् वृन्दे इति वा विग्रहः। निर्धारणे षष्ठी। 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पाक्षिकः पुंवद्भावः। पञ्चानां मध्ये रामः प्रिय इत्यर्थः। रामादयश्चत्वारः शान्ता चेति पञ्च। वधूचतुष्केऽपि सीतादिस्नुषाचतुष्टयेऽपि अस्य जनकस्य तनूजा सीता यथा तस्य राज्ञो दशरथस्य प्रिया तथा अन्या

दयंगमः । कथं विस्मर्यसे ।

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
संबन्धे विपरीतमेव तदभूदाराधनं ते मयि ।
त्वं कालेन तथाविधोऽप्यपहृतः संबन्धबीजं च त-
द्घोरेऽस्मिन्मम जीवलोकनरके पापस्य धिग्जीवितम् ॥१७॥

कौसल्या—जादे जाणइ किं करोमि । दिढवज्जलेवघडिअबन्ध-णिच्चलं हदजीविदं मं मन्दभाइणीं ण पडिच्चअदि । ( क )

अरुन्धती—आश्वसिहि राजपुत्रि बाष्पविश्रामोऽप्यन्तरे कर्तव्य एव । अन्यच्च किं न स्मरसि यदवोचदृष्यशृङ्गाश्रमे युष्माकं कुल-गुरुर्भवितव्यं तथेत्युपजातमेव किंतु कल्याणोदर्कं भविष्यतीति ।

( क ) जाते जानाति किं करोमि । दृढवज्रलेपघटितबन्धनिश्चलं हतजीवितं मां मन्दभागिनीं न परित्यजति ।

ऊर्मिलाप्रभृती राज्ञः प्रिया न अस्य तनूजा सीतेत्यनेन सीताया एव जनकाभिसंधिना तनूजात्वं नान्यासामिति व्यज्यते । वधूचतुष्केऽपीति निर्धारणे सप्तमीदर्शनात् ॥ १६ ॥ सर्वैः प्रकारैर्धर्मैः हृदयंगमः । **कन्याया इति** । संबन्धे कन्यावरसंबन्धे । कन्यायाः पितरौ जनन्यः जनकाश्च जामातुर्वरस्याप्तं संनिहितबन्धुं जनं पूजयन्ति किल संभावयन्तीति प्रसिद्धम् । तदाराधनं पूजनं ते मयि विपरीतमभूत् । त्वत्कर्तृकमद्विषयकपूजनं सत् प्रतिलोमं जातमित्यर्थः । तथाविधोपि त्वं कालेनापहृतः । मया पूज्यमानं भवन्तं द्रष्टुमन्यदयं तावद्भाग्याभावेऽपि केवलं वा भवन्तं द्रष्टुं मदीयदैवदुर्विपाको नाक्षाम्यदिति भावः । संबन्धबीजं सीता चापहृता । लिङ्गविपरिणामः । पूर्वोक्तयोरभावेऽपि तादृशभवदभिमता सीतापि दैवेन नाक्षम्यतेति भावः । घोरे भयंकरे अस्मिन्नेवंविधबहुदुःखाभाजने जीवलोकाबिले पापस्य पूजनविपर्यासादिहेतुभूतदुरितप्रचुरस्य मम जीवितं प्राणधारणं धिक् । तत्कर्मिका निन्देत्यर्थः । अत्रेदानीं भवत्पूजाद्यभावेऽपि यत्र तल्लाभो लोकान्तरे तत्र गमनस्यापि मदीयजीवनयोनिदुरितं प्रतिबन्धकमिति भावः ॥ १७ ॥ दृढेन वज्रलेपेन बन्धकद्रव्यलेपेन यः प्रतिबन्धो विश्लेषानुत्पादस्तेन निश्चलं हतजीवितं निन्द्यजीवितम् ॥ आश्वसिहि आश्वासं दुःखलघूकरणं प्राप्नुहि । बाष्पस्य

सुक्षत्रियेऽन्यथा मन्तव्यम् ।

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयोऽभूत् ।
भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता
नैते वाचं विप्लुतार्थां वदन्ति ॥ १८ ॥

( नेपथ्ये कलकलः । सर्वे आकर्णयन्ति । )

**जनकः**—अये अद्य खलु शिष्टानध्याय इत्युद्धतं खेलतां बटूनां कलकलः ।

**कौसल्या**—सुलहसोक्खं दाव बालत्तणं होदि । ( निरूप्य । )

---

( क ) कुतोऽतिक्रान्तमनोरथाया ममैतत् ।

---

अन्तरेषु मध्ये मध्ये । अन्यच्च बाष्पविश्रामादन्यदपि । यत्कुलगुरुर्वसिष्ठः अवोचत्तन्न स्मरसि किम् । भवितव्यं तथेति परित्यागरूपेण भवनमपरिहार्य-मिति हेतोः । आजातमापाततो जातम् । न त्वन्ततस्तथेत्यर्थः । कल्याणो-दर्कं मङ्गलपर्यवसायि भविष्यतीति यदवोचत्तन्न स्मरसि किम् ॥ अतिक्रान्त-मनोरथाया असंभाव्याभिलाषविषयायाः ॥ मृषोद्यमिति मिथ्यावचनमिति । **आविर्भूतेति** । आविर्भूतज्योतिषां परज्योतिर्विषयकपरोक्षज्ञानवतां ब्राह्म-णानां विप्राणां ये व्याहारा उक्तयस्तेषु संशयः प्रामाण्यसंदेहो माभूत् नोत्पद्यतामित्यर्थः । हि यस्मादेषां ब्राह्मणानां वाचि भद्रा मङ्गलकरी लक्ष्मीः अर्थोपधायकत्वातिशयः । निषक्ता नित्यसङ्गिनी भवति । एते आविर्भूतज्यो-तिषो ब्राह्मणाः विप्लुतार्थामसदर्थां वाचमेकामपि गिरं न वदन्ति नोच्चारयन्ति । पूर्वत्र बहुवचनं तदीयसर्ववाचामपि प्रामाण्यबोधनार्थम् अत्रैकवचनं तु तदीययत्किंचिद्वचोप्यप्रामाण्यं नेति बोधनार्थमिति द्रष्टव्यम् । अत्र श्लोके 'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥' इति श्रुतिः स्फोरिता ॥ १८ ॥ शिष्टागमनप्रयुक्ताध्ययनाभावः शिष्टानध्ययनः ॥ सुलभं सौख्यं यस्मिंस्तथो-क्तम् । अनेन 'वृद्धो जनो दुःखशतानि भुङ्क्ते' इत्युक्तवार्द्धकनिन्दा व्यज्यते ।

---

१ भअवदि अदिक्कन्तो मणोरहो ( अतिक्रान्तो मनोरथः ). २ भवितव्यमेव तेन कल्याणोद. ३ भव्या. ४ विप्लुतां व्याहरन्ति. ५ भनध्ययनः. ६ अस्खलितं.

अम्हे एदाणं मज्झे को एसो रामभद्दलच्छीपरिसोहिदेहिं सावट्ठम्भ-मुद्धललिदेहिं अङ्गेहिं अह्माणं लोअणाइं शीअलावेदि। (क)

अरुन्धती—(अपवार्य सहर्षबाष्पम्।) इदं नाम तद्भागीरथी-निवेदितरहस्यं कर्णामृतम्। नत्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति। (प्रकाशम्।)

कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो
बटुपरिषदं पुण्यश्रीकः श्रियेव सभाजयन्।
पुनरपि शिशुर्भूतो वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम्॥ १९॥

कञ्चुकी—नूनं क्षात्रियब्रह्मचारी दारकोऽयमिति मन्ये।

जनकः—एवमेतत्। तथा हि

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्।

---

(क) सुलभसौख्यं तावत् बालत्वं भवति। अहो एतेषां मध्ये क एष रामभद्रलक्ष्मीपरिशोभितैः सावष्टम्भमुग्धललितैरङ्गैरस्माकं लोचनानि शीतलयति।

---

रामभद्रस्य कौमारलक्ष्म्या चन्द्रवदाह्लादकारिरामशैशवस्य। योऽयमवष्टम्भ आलम्बनं तत्सहितैः। लक्ष्मीपदेन शैशवस्य स्पृहणीयत्वं व्यज्यते। संबन्धशब्दत्वात्सापेक्षत्वेऽपि समासः। मुग्धललितैः सुन्दरसुकुमारैः॥ हर्षः इष्टागमात्प्रीतिः। उत्कण्ठा आकारादिविषयाभिलाषः। भागीरथीनिवेदितं गंगया कथितं रहस्यं गूढं यत्कर्णयोरमृतवद्भोग्यम्। तदिदं नामायुष्मतोः कुशलवयोर्मध्ये कतरोयऽमिति कुश इति वा लव इति वा न विद्मः न जानामि। 'अस्मदो द्वयोश्च' इत्येकत्वे बहुवचनम्। **कुवलयेति।** शिखण्डकमण्डनः काकपक्षधरो बटूनां ब्रह्मचारीणां परिषदं सदः श्रिया कान्त्या सभाजयन्नलंकुर्वन्। अमृताञ्जनममृतमयमञ्जनं शीतलत्वादिभिः। तद्धि रमणीयमिति कविसमयप्रसिद्धिः॥ १९॥ मन्ये अनुमिनोमि॥ एतद्भवता संभाव्यमानमेवं वस्तुभूतम्। **चूडाचुम्बितेति।** चूडाचुम्बितानि संयुक्ताग्राणि कङ्कपत्राणि बाणपक्षा यस्मिंस्तथोक्तम्। पृष्ठतोऽभितः पृष्ठम्। द्वयोर्भागयोरित्यर्थः। भस्ममयं स्तोकमल्पं पवित्रं पावनं लाञ्छनं पुण्ड्रं यस्य तत्तथोक्तम्। उरः

... मौञ्जिका

पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥ २० ॥

भगवत्यरुन्धति किमुत्प्रेक्षसे कुतस्त्योऽयमिति ।

अरुन्धती—अद्यैवागता वयम् ।

जनकः—आर्य गृष्टे अतीव मे कौतुकं वर्तते तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छ । इमं च बालकं ब्रूहि । वत्स केऽप्येते प्रवयसस्त्वां दिदृक्षव इति ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

कौसल्या—किं मण्णेध एव्वं भणिदो आअमिस्सदित्ति । (क)

जनकः—भिद्येत वा सद्वृत्तमीदृशस्य निर्माणस्य ।

कौसल्या—( निरूप्य । ) कहं सविणअं णिसामिदगिट्ठिवअणो विसज्जिदइसिदारओ इतोऽहिमुहं पसरिदो एव्व सो वच्छो । ( ख )

जनकः—( चिरं निर्वर्ण्य । ) भोः किमप्येतत् ।

[ क ] किं मन्यध्व एवं भणित आगमिष्यतीति ।

[ ख ] कथं सविनयं निशामितगृष्टिवचनो विसर्जितर्षिदारक इतोऽभिमुखं प्रसृत एव स वत्सः ।

रक्तं वासः अधः उरसोऽधस्तात् । क्षत्रियब्रह्मचारिणां मेखलेत्युक्तं माञ्जिष्ठं राजन्यस्य इति च । पाणौ कार्मुकं धनुरक्षसूत्रवलयं जपमालिकावलयम् । अस्तीति शेषः । अपरे पैप्पलः इति पाठे अपरे पाणौ अश्वत्थदण्डः । अपरः पैप्पलः इति पाठे धनुर्दण्डादपरः । अन्य इत्यर्थः ॥ २० ॥ कुतस्त्यः कस्माद्भवः ॥ अतिशयितं कौतुकं विशिष्टवस्तुजिज्ञासौत्कण्ठ्यम् । प्रवयसो वृद्धाः । दिदृक्षवः द्रष्टुमिच्छवः ॥ यदाज्ञापयतीत्यर्थः तदनुतिष्ठामीति शेषः ॥ एवं भणितः प्रवयसस्त्वां दिदृक्षव इत्युक्तः सन् आगमिष्यति किमिति मन्यध्वे । किं संदिग्धं ॥ ईदृशस्य लोकोत्तरस्य निर्माणस्याकारस्य । निर्मीयते यन्निर्माणम् । कर्मणि ल्युट् । 'कृत्यल्युटो बहुलम्' इत्युक्तेः । सद्वृत्तं सदाचारो भिद्यते वा । छिन्नं भवति किमित्यर्थः । 'कर्मवत्कर्मणा' इति यगात्मनेपदे ॥ सविनयं निशामितं श्रुतं गृष्टिवचनं येन तथोक्तः ॥ एतद्वक्ष्यमाणं किमपि अपूर्वमित्यर्थः । तदाह-

महिम्नामेतस्मिन्विनयशिशिरो मौग्ध्यमसृणो
विदग्धैर्निर्ग्राह्यो न पुनरविदग्धैरतिशयः ।
मनो मे संमोहः स्थिरमपि हरत्येष बलवा-
नयोधातुं यद्वत्परिलघुरयस्कान्तशकलः ॥ २१ ॥

लवः—( प्रविश्य । ) अज्ञातनामक्रमाभिजनान्पूज्यानपि नः स्वतः कथमभिवादयिष्ये । [ विचिन्त्य । ] अयं पुनरविरुद्धः प्रकार इति वृद्धेभ्यः श्रूयते । ( सविनयमुपसृत्य । ) एष वो लवस्य शिरसा प्रणामपर्यायः ।

अरुन्धतीजनकौ—कल्याणिन् आयुष्मान्भूयाः ।

कौसल्या—जाद चिरं जीव । ( क )

अरुन्धती—एहि वत्स । ( लवमुत्सङ्गे गृहीत्वात्मगतम् । दिष्ट्या न केवलमुत्सङ्गश्चिरान्मनोरथोऽपि मे संपूर्णः ।

---

( क ) जात चिरं जीव ।

---

महिम्नामित्यादि । विनयेन ज्ञानवृद्धशीलवृद्धसन्निधौ स्वनिकर्षपर्यवसाय्यवस्थानेन शिशिरः शीतलः मौग्ध्येन मसृणः पौरुष्यरहितः । विदग्धैः सूक्ष्मदर्शिभिर्निर्ग्राह्यो निर्णेयः । अविदग्धैः पुनर्न ग्राह्यो निर्णेतुमशक्यः । एतस्मिन्महिम्नामतिशयः लवनिष्ठप्रकृष्टज्ञानतेजःप्रकृतिगुणादिमाहात्म्यानामुत्कर्षः । संमोहेन मूर्छया स्थिरमपि काष्ठवन्निष्पन्दमपि मे मनश्चित्तं परिलघुरल्पः अयस्कान्तशकलः अयस्कान्तखण्डः अयोधातुं यद्वल्लोहपिण्डमिव हरति कर्षति । अत्र विनयशिशिरो मौग्ध्यमसृण इत्याभ्यां सलिलहिमोपष्टम्भेन ज्योत्स्नीभवतां सूर्यतेजसां सादृश्यं व्यज्यते ॥ २१ ॥ क्रमः सत्काराद्यनुपूर्व्यं वयः स्थाविरादिकं वयःक्रमस्तस्यौचित्य प्राप्तवता । ज्ञातं च तद्वयःक्रमौचित्यं तस्याभावः अज्ञातवयःक्रमौचित्यम् । अर्थाभावे अव्ययीभावः । अपञ्चम्या इति प्रतिषेधादम्भावो न । तथा च वयःक्रमौचित्यज्ञानाभावादित्यर्थः । कथमभिवादयिष्ये केन क्रमरूपप्रकारेण नमस्करिष्ये । अविरुद्धः अविपरीतः प्रकारोऽनुष्ठानविशेषः । सामान्यवृद्धविषयकप्रणामकरणरूप इति भावः । सभायां प्रत्येकं न नमस्कुर्यादिति गौतमस्मरणमिहाभिप्रेतम् ॥ उत्सङ्गे अङ्के ॥ दिष्ट्येत्यानन्दे । उत्सङ्गः केवलं न

**कौसल्या**—जाद इदो वि दाव एहि । ( उत्सङ्गे गृहीत्वा । ) अह्महे ण केवलं दराविअसन्तणीलुप्पलसामलुज्जलेण देहबन्धेण कवलिदारविन्दकेसरकसाअकण्ठकलहंसणिणाददीहरदीहरेण सरेण अ रामभद्दं अणुहरदि । णं कठोरकमलगब्भपह्मलो सरीरप्पस्सो वि तारिसो एव्व वच्छस्स । जाद पेक्खामि दाव दे मुहपुण्डरीअम् । ( चबुकमुन्नमय्य निरूप्य सबाष्पाकूतम् । ) राएसि किं ण पेक्खसि णिउणं णिरूवज्जन्तं से मुहं वच्छाए वहूए मुहचन्देण संवददि एव्व । ( क )

**जनकः**—पश्यामि सखि पश्यामि ।

**कौसल्या**—अह्महे उम्मत्तीभूदं विअ मे हिअअं किंपि एदोमुहं विलवदि । [ ख ]

**जनकः**—

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
संपूर्णप्रतिबिम्बितेव निखिला सैवाकृतिः सा द्युति ।

---

( क ) जात इतोऽपि तावदेहि । अहो न केवलं दरविकसन्नीलोत्पलश्यामलोज्ज्वलेन देहबन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसनिनाददीर्घदीर्घेण स्वरेण च रामभद्रमनुहरति । ननु कठोरकमलगर्भपक्ष्मलः शरीरस्पर्शोऽपि तादृश एव वत्सस्य । जात प्रेक्षे तावत्ते मुखपुण्डरीकम् । राजर्षे किं न प्रेक्षसे निपुणं निरूप्यमाणमस्यमुखं वत्साया वध्वा मुखचन्द्रेण संवदत्येव ।

( ख ) अहो उन्मत्तीभूतमिव मे हृदयं किमपीतोमुखं विलपति ।

---

करणं तथाविधेन । अनुसरति अनुकरोति । कठोरस्य समग्रस्य कमलस्य गर्भवदान्तरपत्रवत्पक्ष्मलः स्फीतः तादृश एव रामभद्रस्पर्शसदृश एव । चुबुकमधराधोदेशम् । निपुणं निरूप्यमाणः हेतुभिः पटुतरं विचार्यमाणः । अयमिति शेषः । मुखं चन्द्रेण संवदत्येव । सीतामुखचन्द्रेति योगिकमादृश्यप्रमाणविषयो भवति ॥ पश्यामि सखि पश्यामीति आदराद्द्विरुक्तिः ॥ उन्मत्तीभूतमिव विभ्रान्तमिव कुतोमुखं यत्र क्वापि असंभाव्यविषये लग्नमिति यावत् । विलपति परिदेवयति । 'विवलते' इति च पाठः ॥ **वत्साया इति** । अस्मिन् शिशौ लवे वत्सायाः सीताया रघूद्वहस्य रामचन्द्रस्य च संवृत्तिः संप-

सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा दैव किमुत्पथैर्मम मनः पारिप्लवं धावति ॥ २२ ॥

कौसल्या—जाद अत्थि दे मादा सुमरासि वा तादम्। (क)

लवः—नहि नहि।

कौसल्या—तदो कस्स तुमम्। (ख)

लवः—भगवतः वाल्मीकेः।

कौसल्या—अयि जाद कहिदव्वं कहेहि। (ग)

लवः—एतावदेव जानामि।

(नेपथ्ये)

भो भोः सैनिका एष खलु कुमारश्चन्द्रकेतुराज्ञापयति न केनाचिदाश्रमाभ्यर्णभूमय आक्रमितव्या इति।

अरुन्धतीजनकौ—अये मेध्याश्वरक्षाप्रसङ्गादुपागतो वत्सश्चन्द्रकेतुरद्य द्रष्टव्य इत्यहो सुदिवसः।

---

(क) जात अस्ति ते माता स्मरसि वा तातम्।

(ख) ततः कस्य त्वम्।

(ग) अयि जात कथयितव्यं कथय।

---

कः। संबन्ध इत्यर्थः। प्रतिबिम्बितेवाभिव्यज्यते अभिव्यक्ता भवति। दर्पणादौ बिम्बवद्दृश्यत इत्यर्थः। निखिला कृत्स्ना आकृतिरवयवस्थानविशेषः सैव सीतारघूद्वहसंबन्धिन्येव। द्युतिर्लावण्यं तयोरेव संबन्धिनी। वाणी लवस्य वाक् सा तयोरेव संबन्धिनी। विनयः प्रश्रयः स एव सहजः स्वाभाविकः। पुण्यश्चासौ पावनश्चासौ अनुभावः समीचीनव्यवसायः। असौ सीतारघूद्वहसंबन्ध्येव। अदूरविप्रकृष्टवाच्योऽदःशब्दः। 'अनुभावः प्रभावे च सतां च मतिनिश्चये' इत्यमरः। देवि सीते। मम मनः। पारिप्लवं सत् चञ्चलं सत् उत्पथैरमार्गैः धावति अनवस्थितं भवति। हा हा। दुःख्यत इत्यर्थः। देवीत्यनेन देवभूयंगतायास्तव कथमिदं संगच्छत इति व्यज्यते। अत एव ह्युत्पथैरित्युक्तम्। अत्र च 'ऋक्पूरब्धूःपथामा—' इति समासान्तः॥ २२॥ कस्य त्वम्। कस्माज्जात इत्यर्थः। सुगृहीतं सुष्ठु प्रतिपादितं नामधेयं यस्य तथो-

**कौसल्या**—वच्छलक्खणस्स पुत्तओ आणवेदित्ति अमिदबिन्दुसुन्दराइं अक्खराइं सुणीअन्दि । ( क )

**लवः**—आर्य क एष चन्द्रकेतुर्नाम ।

**जनकः**—जानासि रामलक्ष्मणौ दाशरथी ।

**लवः**—एतावेव रामायणकथापुरुषौ ।

**जनकः**—अथ किम् ।

**लवः**—तत्कथं न जानामि ।

**जनकः**—तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः ।

**लवः**—ऊर्मिलायाः पुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः ।

**अरुन्धती**—( विहस्य । ) आविष्कृतं कथाप्रावीण्यं वत्सेन ।

**जनकः**—( विचिन्त्य । ) यदि त्वमीदृशः कथायामभिज्ञस्तद्ब्रूहि तावत्पृच्छामस्तेषां दशरथात्मजानां कियन्ति किंनामधेयान्यपत्यानि केषु केषु दारेषु प्रसूतानीति ।

**लवः**—नायं कथाप्रविभागोऽस्माभिरन्येन वा श्रुतपूर्वः ।

**जनकः**—किं न प्रणीत एव कविना ।

---

( क ) वत्सलक्ष्मणस्य पुत्रक आज्ञापयतीत्यमृतबिन्दुसुन्दराण्यक्षराणि श्रूयन्ते ।

---

मेध्याश्वस्य यज्ञाङ्गाश्वस्य प्रसङ्गादवश्यानुरोद्धव्यत्वाद्धेतोः द्रष्टव्य इति सुदिवसः । चन्द्रकेतुदर्शनाच्छोभनदिवसोऽयं विस्मयनीय इत्यर्थः । अमृतबिन्दुसुन्दराण्यक्षराणि सुधापृषत इव भोग्या वर्णाः । दाशरथी दशरथपुत्रौ जानासि किमिति काक्वा योजनीयम् ॥ रामायणकथायाः रामायणनामकवाक्यप्रबन्धस्य पुरुषौ प्रतिपाद्यौ । अथ किमित्यङ्गीकारे । तर्हि ऊर्मिलापुत्रत्वे । मैथिलस्य मिथिलाधिपतेः ॥ आविष्कृतं प्रकाशितम् । वत्सेन लवेन ॥ कथायामभिज्ञस्तत्प्रतिपाद्यार्थज्ञानवान् । किंनामधेयानीत्यारभ्य केषु प्रसूतानीत्यन्तस्य ब्रूहीत्यनेनान्वयः । पश्यामः अस्मज्ज्ञातविषयकत्वद्वचनं शृणुम इत्यर्थः ॥ कथा-

लवः—प्रणीतो न प्रकाशितः । तस्यैव कोऽप्येकदेशः सन्दर्भान्तरेण रसवानभिनेयार्थः कृतः । तं च स्वहस्तलिखितं मुनिर्भगवान्व्यसृजद्भगवतो भरतस्य मुनेस्तौर्यत्रिकसूत्रकारस्य ।

जनकः—किमर्थम् ।

लवः—स किल भगवान्भरतस्तमप्सरोभिः प्रयोजयिष्यतीति ।

जनकः—सर्वमिदमाकूततरमस्माकम् ।

लवः—महती पुनस्तस्मिन्भगवतो वाल्मीकेरास्था । यतः केषांचिदन्तेवासिनां हस्तेन तत्पुस्तकं भरताश्रमं प्रति प्रेषितम् । तेषामनुयात्रिकश्चापपाणिः प्रमादापनोदनार्थमस्मद्भ्राता प्रेषितः ।

कौसल्या—जाद भादावि दे अत्थि । ( क )

लवः—अस्त्यार्यः कुशो नाम ।

कौसल्या—जेट्ठोत्ति भणिदं होदि । ( ख )

लवः—एवमेतत् । प्रसवानुक्रमेण स किल ज्यायान् ।

जनकः—किं यमजावायुष्मन्तौ ।

---

( क ) जात भ्रातापि तेऽस्ति ।

( ख ) ज्येष्ठ इति भणितं भवति ।

---

एकदेशोंऽशः । स च सप्तमे वक्ष्यमाणान्तर्नाटकार्थक इति ज्ञेयम् ॥ प्रबन्धान्तरेण श्राव्यप्रबन्धातिरिक्तदृश्यप्रबन्धरूपकरूपेण वा रसवान् करुणाद्भुतरसप्रतिपादकः सर्वाकर्णनादितररसप्रतिपादकः अभिनेयः सात्त्विकाङ्गिकादिचतुर्विधाभिनयप्रकाश्योऽर्थः अभिधेयः यस्य तथोक्तीकृतः । मुनिर्वाल्मीकिः । तौर्यत्रिकसूत्रधारस्य नृत्तगीतवादित्रशास्त्राचार्यस्य भरतस्य भावरागतालशास्त्राचार्यत्वमूलकृत्तदाद्यक्षरघटितभरतनामकस्य ॥ तं प्रबन्धं अप्सरोभिः प्रयोज्यकर्तृभिः प्रयोजयिष्यतीत्येतदर्थम् ॥ सर्वमिदं प्रणीतस्याप्रकाशनं प्रबन्धान्तरेण करणं भरतं प्रति प्रेषणं चाकूततरं गूढार्थकम् ॥ आस्था अवश्यकत्वप्रकारकेच्छा । अनुयात्रिकोऽनुचरः । प्रमादस्यानवधानप्रयुक्तप्रतीतस्य च्छेदनार्थं निवृत्त्यर्थमस्मद्भ्राता मत्सहजः । आर्यः पूज्यः । ज्येष्ठ इति भणितं भवति अग्रज इति ध्वनितं भवति ।

**जनकः**—वत्स कथय कथाप्रबन्धस्य कीदृशः पर्यन्तः ।

**लवः**—अलीकपौरापवादोद्विग्नेन राज्ञा निर्वासितां देवीं देवयजनसंभवां सीतामासन्नप्रसववेदनामेकाकिनीमरण्ये लक्ष्मणः परित्यज्य प्रतिनिवृत्त इति ।

**कौसल्या**—हा वच्छे मुद्धचन्दमुहि को दाणिं दे सरीरकुसुमस्स झत्ति देव्वदुव्विलासपरिणामो एक्काइणीए णिवडिदो ।

**जनकः**—हा वत्से

> नूनं त्वया परिभवं च वनं च घोरं
> तां च व्यथां प्रसवकालकृतामवाप्य ।
> क्रव्याद्गणेषु परितः परिवारयत्सु
> संत्रस्तया शरणमित्यसकृत्स्मृतोऽस्मि ॥ २३ ॥

**लवः**—( अरुन्धतीं प्रति ) आर्ये कावेतौ ।

**अरुन्धती**—इयं कौसल्या । अयं च जनकः ।

**लवः**—(सबहुमानखेदकौतुकं पश्यति । )

**जनकः**—अहो निर्दयता दुरात्मनां पौराणाम् । अहो रामस्य राज्ञः क्षिप्रकारिता ।

---

( क ) हा वत्से मुग्धचन्द्रमुखि क इदानीं ते शरीरकुसुमस्य झटिति दैवदुर्विलासपरिणाम एकाकिन्या निपतितः ।

---

विति ॥ कथाप्रपञ्चस्य कथाविस्तरस्य । पर्यन्तोऽवसानम् । यद्वा प्रपञ्चनं प्रकाशनं प्रपञ्चस्तस्य कोऽवधिः । कियत्पर्यन्तं प्रकाशित इत्याशयः ॥ अलीको मिथ्याभूतः पौरापवादः पौरकर्तृकदोषकथनं तेनोद्विग्नेन संभ्रान्तेन राज्ञा रामेण निर्वासितां गृहान्निष्कासितां देवयजनसंभवां यागभूमिजातां परित्यज्य लक्ष्मणः प्रतिनिवृत्त इति यत् एष पर्यन्त इति योजना ॥ शरीरकुसुमस्य कुसुमसदृशशरीरस्य । दैवदुर्विलासस्य दैवदुश्चेष्टितस्य परिणामः फलोपधानम् । क इति दुःख्यते ॥ **नूनमिति** । क्रव्याद्गणेषु व्याघ्रादिषु परितः समन्तात्परिवारयत्सु सत्सु । मण्डलीकृत्य व्याप्नुवत्सु । संत्रस्तया त्वयाहं शरणमिति स्मृतः नूनं संभावये ॥ २३ ॥ दुरात्मनां दुर्बुद्धीनाम् । क्षिप्रकारिता अपरीक्ष्यकारित्वम् । **एतद्वैशसेति** । एतद्वैशसमेव महाव्यसनमेव

एतद्विशसवज्रघोरपतनं शश्वन्ममोत्पश्यतः
क्रोधस्य ज्वलितुं धगित्यवसरश्चापेन शापेन वा ।

**कौसल्या**—( सभयकम्पम् ) भअवदि परित्ता[2]हि परित्ताहि । पसादेहि कु[3]विदं राएसिम् । ( क )

**लवः**—

[4]एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम् ।

**अरुन्धती**—

राजन्नपत्यं रामस्ते पाल्याश्च कृपणा जनाः ॥ २४ ॥

**जनकः**—

शान्तं वा रघुनन्दने तदुभयं यत्पुत्रभाण्डं हि मे
भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः ॥ २५ ॥

( प्रविश्य )

**संभ्रान्ता बटवः**—कुमार कुमार अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेष्वनुश्रूयते सोऽयमधुनास्माभिः प्रत्यक्षीकृतः ।

---

( क ) भगवति परित्रायस्व परित्रायस्व । प्रसादय कुपितं राजर्षिम् ।

---

वज्रस्याशनेर्घोरं पतनं तीक्ष्णपतनं शश्वदुत्पश्यतो मम क्रोधस्य शापेनानिष्टोपधायकसंकल्पेन चापेन च मारकधनुषा च झटिति ज्वलितुमवसरः प्राप्तकालता । राजर्षित्वादिति भावः । प्रसादय प्रसन्नं कुरु ॥ एतद्धीति । परिभूतानामवमतानां मनस्विनां महामनसां प्रायश्चित्तं कोपप्रतीकारः एतत् प्रसादनमित्यर्थः । अपत्यं रामः कृपणजनाश्च ते पाल्याश्च रक्षणीयाः ॥ २४ ॥ **शान्तं वेत्यादि** । वा अथवा । शापेन चापेन च ज्वलनाभावे इत्यर्थः । यद्यस्मात्पुत्रभाण्डं मूलधनं पुत्रभूतरामात्मकमूलधनम् । भूयिष्ठानि भूयांसि द्विजाः बालाः शिशवो वृद्धाः स्थविरा विकला अन्धबधिरादयः स्त्रैणं स्त्रीसमूहः यस्य तथोक्तः पौरो जनश्च । मे हि मदीयाः किल । तस्मात्तदुभयं शापश्चापश्च शान्तं भवतु निवृत्तं भवतु । रुषं न दधे कोपं न धारयामि । यद्वा यद्यस्माद्भूयिष्ठद्विजबालवृद्धविकलस्त्रैणः पौरो जनः । चकारेण रामः समुच्चीयते । तदुभयं पौरजनरामात्मकोभयं मे पुत्रभाण्डं पुत्रात्मकमूलधनवन्मम संरक्षणीयं तत्तस्मात् शान्तं क्रोधेन ज्वलित्वा अलं रुषं न

तद्भूत कीदृशः ।

**बटवः**—श्रूयताम् ।

> पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
> दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।
> शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रा-
> न्किं वाऽख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥२६॥

( इत्यजिने हस्तयोश्चाकर्षन्ति । )

**लवः**—( सकौतुकोपरोधविनयम् । ) आर्याः पश्यत पश्यत । एभिर्नीतोऽस्मि । ( इति त्वरितं परिक्रामति । )

**अरुन्धतीजनकौ**—पूरयतु कौतुकं वत्सः ।

**कौसल्या**—भअवदि जाणामि एदं अणालोअअन्ती ण जीआमि विअ अदो अण्णदो भविअ पेक्खह्म दाव गच्छमाणं दीहाउम् । ( क )

---

( क ) भगवति जानाम्येतमनालोकयन्ती न जीवामीवातोऽन्यतो भूत्वा प्रेक्षामहे तावद्गच्छन्तं दीर्घायुषम् ।

---

आरण्यकत्वादेवमुक्तिः । श्रूयते शाब्दबोधविषयो भवति । प्रत्यक्षीकृतः चक्षुर्विषयीकृतः । पशुसमाम्नाये पशुद्रव्यकयागप्रतिपादकवेदभागे साङ्ग्रामिके युद्धकाण्डे च । कीदृशः किंलक्षणः ॥ **पश्चादित्यादि** । सः अश्व इत्युच्यमानः विपुलं पुच्छं पश्चाद्वहति । वनमहिषः कोऽयमुभयतःपुच्छ इत्यारण्यवासनानुरूपेण व्यावृत्त्यर्थं । पश्चात्पदम् । अन्यथा पुच्छस्य पश्चाद्वहनाव्यभिचारात् । विपुलमित्यनेन खरव्यावृत्तिः तस्य हि पुच्छं गोवद्रज्जूकृतं भवति । एवं च वक्ष्यमाण विशेषणानां तत्साधारणत्वेऽपि न दोषः । धूनोति चालयति । दीर्घग्रीवो भवति आयतकण्ठो भवति । तस्य खुराश्चत्वार एव । नाधिका इत्यर्थः । शष्पाणि बालतृणानि । अत्ति खादति । शकृत्पिण्डकान् पुरीषपिण्डकानाम्रमात्रान् रसालशलाटुपरिमितान् प्रकिरति विक्षिपति । स पुनर्दूरं व्रजति गच्छति ॥ २६ ॥ कौतुकं हर्षः । उपरोधः बलात्क्रियमाणत्वम् ॥ अरण्यगर्भाणां अरण्यचरशिशूनां रूपै-

---

१ इति नाम. २ अये श्रु०. ३ वा ख्यातैः, व्याख्यानैः ४ इत्युपसृत्य. ५ महत् कौतुकं वत्सस्य. ६ कुतूहलं. ७ अरण्णगब्भरूवालावेहिं तुह्मे तोसिदा अह्मेअ । भअवदि

अरुन्धती—अतिजवेन दूरमतिक्रान्तः स चपलः कथं दृश्यते ।

कञ्चुकी—( प्रविश्य । ) भगवान्वाल्मीकिराह ज्ञातव्यमेतदवसरे भवद्भिरिति ।

जनकः—अतिगम्भीरमेतत्किमपि । भगवत्यरुन्धति सखि कौसल्ये आर्य गृष्टे स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः ।

( इति निष्क्रान्तो वृद्धवर्गः । )

( प्रविश्य । )

बटवः—पश्यतु कुमारस्तदाश्चर्यम् ।

लवः—दृष्टमवगतं च । नूनमाश्वमेधिकोऽयमश्वः ।

बटवः—कथं ज्ञायते ।

लवः—ननु मूर्खाः पठितमेव हि युष्माभिरपि तत्काण्डे । किं न पश्यथ प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः । तत्प्रायमेव बलमिदं दृश्यते । यदीह न प्रत्ययस्तद्गत्वा पृच्छत ।

बटवः—भो भोः किंप्रयोजनोऽयमश्वः परिवृतः पर्यटति ।

लवः—( सस्पृहमात्मगतम् । ) अये अश्वमेध इति नाम विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रपरिभावी महानुत्कर्षनिकर्षः ।

---

रालैश्च तोषिता यूयम् । अहं तं पश्यन्ती वञ्चितेति जानामि । रामभद्रसंवादेन प्रलोभिताहमिति भावः ॥ कञ्चुकी । गृष्टिरित्यर्थः । अवसरे प्राप्तकाले ॥ एतद्वाल्मीकिवाक्यमतिगम्भीरं गूढाशयं किमपि अपूर्वम् ॥ वृद्धानामरुन्धतीप्रभृतीनां वर्गः समूहः ॥ दृष्टं चक्षुर्विषयीकृतम् । नूनमश्वमेधिकोऽयमश्व इत्यवगतमनुमितम् । अश्वमेधाय प्रभवत्याश्वमेधिकः । तत्काण्डमश्वमेधप्रतिपादकश्रुतिभागः । बालकाण्डं वा तत्रापि ह्यश्वमेधः प्रसक्तः । काण्डोऽस्त्रीत्युक्तः क्लीवत्वम् । शतं कवचिनः शतं निषङ्गिणः शरधिवन्तः । शतमित्यर्थः । शतं दण्डिनः शतं रक्षितार इत्येतन्न पश्यथ किमित्यर्थः । तत्प्रायमेवान्यदपि कश्चित्प्रभृतिसुसदृशं चान्यदपि । अनीकमित्यर्थः । विप्रत्ययो यदि संशयश्चेत् ॥ किंप्रयोजनः किंफलकः । परिवृतः । रक्षितृभिरिति शेषः । पर्यस्यति परितः संचरति परितो गच्छति ॥ [illegible]

अयमश्वः पताकेयमथवा वीरघोषणा।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः॥ २७॥

लवः—( सगर्वमिव ) अहो संदीपनान्यक्षराणि।

बटवः—किमुच्यते। प्राज्ञः खलु कुमारः।

लवः—भो भोः तत्किमक्षत्रिया पृथिवी यदेवमुद्घोष्यते।

( नेपथ्ये )

अरे रे[4] महाराजं प्रति कुतः क्षत्रियाः।

लवः—धिग्जाल्मान्।

यदि ते सन्ति सन्त्येव केयमद्य विभीषिका।
किमुक्तैरेभिरधुना तां पताकां हरामि वः॥२८॥

भो भो बटवः परिवृत्य लोष्ठैरभिघ्नन्तो नयतैनमश्वम्। एष रोहितानां मध्ये वराकश्चरतु।

---

व्याज्ञापकदृष्टविशेषः। ऊर्जस्वलः बलिष्ठः। अविचाल्यनिकष इत्यर्थः॥ योऽयमिति। योऽयमाश्वमेधिकोऽश्वः। इयम्। अश्व इत्यर्थः विधेयप्राधान्यात्स्त्रीत्वं पताकात्वं विधेयम्। सप्तान्ययवेषु लोकेषु एकवीरस्य एकेषु प्रधानेषु वीरयति पराक्रमत इत्येकवीरः तस्य। सप्तलोकेत्यत्र मध्यमपदलोपवत्समासः। पात्रादित्वं वा। वीरैक इत्यापत्तिवारणाय एकेषु वीरयतीति विग्रहोऽङ्गीकृतः। दशकण्ठकुलस्य रावणवंशस्य द्विट् शासिता। तस्य राघवस्य पताका विजयध्वजोऽथवा पूर्वोक्तातिरेकेण वीरघोषणा वीर इति जगदाकर्णनानुकूलव्यापारः[ उच्चैर्घोषणमिति यावत्]॥ २७॥ गर्वः परोत्कर्षानादरः। संदीपनानि क्रोधजनकानि। 'मनःप्रज्वलनं क्रोधः' इति ह्युक्तम्॥ एवं पूर्वोक्तरीत्या उद्घोष्यत इति यावत्तस्मात्किमक्षत्रिया पृथिवीत्यन्वयः॥ महाराजं प्रति तदौन्मुख्येन कुतः कस्माद्धेतोः क वा॥ धिग्जाल्मानसमीक्ष्यकारिणः। भवद्विषयका निन्देत्यर्थः। अक्षत्रिया इत्यनुषज्यते। क्षत्रिया न सन्तीति भवद्भिरुच्यते यदि सन्त्येवेत्यवगन्तव्यम्। अद्य क्षत्रियसत्ताधिकरणे अस्मिन्दिवसे इयं विभीषिका भयोत्पादनं का। कीदृशीत्यर्थः। एभिरुक्तैरधुना किम्। न किमपीत्यर्थः। तां वः पताकां हराम्यन्यत्र प्रापयामि॥२८॥ अभिघ्नन्तस्तर्जयन्तः। रोहितानां मृगविशेषाणाम्॥ अग्रभ्रेण्यः शस्त्रप्रक्षयन्तीक्ष्णतरा हि। त्वत्तोऽपि क्रूर इत्यर्थः।

( प्रविश्य सक्रोधदर्पः )

**पुरुषः**——धिक्चाप किमुक्तवानसि । तीक्ष्णनीरसा ह्यायुधीयश्रेणयः शिशोरपि दृप्तां वाचं न सहन्ते । राजपुत्रश्चन्द्रकेतुररिविमर्दनः । सोऽप्यपूर्वारण्यदर्शनाक्षिप्तहृदयो न यावदायाति तावत्त्वरितमनेन तरुगहनेनापसर्पत ।

**बटवः**——कुमार कृतमनेनाश्वेन । तर्जयन्ति विस्फारितशस्त्राः कुमारमायुधीयश्रेणयः । दूरे चाश्रमपदमितस्तदेहि हरिणप्लुतैः पलायामहे ।

**लवः**——( विहस्य ) किं नाम विस्फुरन्ति शस्त्राणि । ( इति धनुरारोपयन् )

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारिघोरघनघर्घरघोषमेतत् ।

---

दृप्तां दर्पयुक्तां वाचं न सहन्ते । शिक्षणाभाववन्तो न भवन्तीत्यर्थः । सोऽपि चन्द्रकेतुरिति योजना । दुर्दान्तोऽमर्षशीलः । अपूर्वारण्यदर्शनेन अननुभूतविपिनावलोकनेनाक्षिप्तहृदयो व्यासक्तमनाः । तरूणां गहनेन दुर्गमसंनिवेशेनापसर्पत पलायध्वम् ॥ कृतं कृतमश्वेनेति । अश्वेन साध्यं किमपि नास्तीत्यर्थः । गर्हायां द्विरुक्तिः । अज्ञानादेव वयमत्र प्रवृत्ता इति भावः । विस्फारितशरासनाः घोषवद्धनुषः तर्जयन्ति भयमुत्पादयन्ति । आश्रमपदं चाश्रमस्थानं च दूरे । विप्रकर्ष इत्यर्थः । हरिणानां यानि प्लुतानि अभूस्पर्शगमनानि । तत्सदृशगमनैरित्यर्थः । पलायामहे परागता भवामः । विस्फुरन्ति घोषयुक्तानि । धनुरारोपयन् । ज्यामिति शेषः । **ज्याजिह्वयेत्यादि** । ज्या मौर्वी सैव जिह्वा रसना तया वलयिता वेष्टिता । उत्कटकोटिरेवोत्तुङ्गाग्रभाग एव दंष्ट्रा यस्य तथोक्तम् । उद्गूर्योऽसंख्याता घोरा भयजनका घनाः सान्द्रा घर्घरघोषा यस्य तथोक्तम् । एतच्चापम् । क्लीबत्वं विचारयितव्यम् । सामान्ये नपुंसकत्वं वा । अथवा भयामृतसकृद्गुरुचापाभरणलाञ्छनमिति नपुंसकशेषोक्तं क्लीबत्वम् । ग्रासे कवलने प्रसक्तमुद्युक्तं हसत् हासयुक्तमन्तकवक्त्रयन्त्रं व्याघ्रादिमारणयन्त्रसदृशकृतान्तस्य कुहरं तस्य जृम्भाविडम्बि जृम्भानुकारि विकटं विषममुदरं मध्यं यस्य तथाविधमस्तु । अस्य चापस्य तथाभवनं प्राप्तकालमित्यर्थः । जिह्वेव ज्या ज्याजिह्वे-

जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥ २९ ॥

( इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे । )

चतुर्थोऽङ्कः ।

## पञ्चमोऽङ्कः ।

( नेपथ्ये )

भो भोः सैनिका जातं जातमवलम्बनमस्माकम् ।

नन्वेष त्वरितसुमन्त्रनुद्यमान-
व्यावल्गत्प्रजवनवाजिना रथेन ।
उद्घातप्रचलितकोविदारकेतुः
श्रुत्वा नः प्रधनमुपैति चन्द्रकेतुः ॥ १ ॥

( ततः प्रविशति सुमन्त्रसारथिना रथेन धनुष्पाणिः साद्भुतहर्षसंभ्रमश्चन्द्रकेतुः । )

चन्द्रकेतुः—आर्य सुमन्त्र पश्य पश्य ।

किरति कलितकिंचित्कोपरज्यन्मुखश्री-
रविरतगुणगुञ्जत्कोटिना कार्मुकेण ।

---

वाधुलवंशजनुषो भूसारनिवासराघवार्यस्य ।
उत्तररामचरित्रव्याख्यायामवसितस्तुरीयाङ्कः ॥

इति श्रीवाधूलवीरराघवविरचितायां भवभूतिभावतल-
स्पर्शिनीसमाख्यायामुत्तररामचरितव्याख्यायां
चतुर्थोऽङ्कः ।

**नेपथ्ये इत्यादि** । भो भोः सैनिकाः सेनासमवायिनः जातमवलम्बनम् । आश्रयो लब्ध इत्यर्थः । **नन्विति** । सुमन्त्रनुद्यमानाः सुमन्त्रेण प्रेर्यमाणाः व्यावल्गाः प्रकर्षेण चञ्चलाः प्रजविताः प्रकृष्टवेगयुक्ता वाजिनोऽश्वा यस्मिंस्तथोक्तेन । उद्घातेषु निम्नोन्नतप्रदेशेषु प्रचलितकोविदारयुक्तध्वजवान् । प्रधनं युद्धं श्रुत्वा उपैति नन्नु किल । चूलिका । 'नेपथ्यान्तस्थितैः पात्रैश्चूलिकाङ्कस्य सूचनम्' इत्युक्तेः ॥ १ ॥ **किरतीति** । कलितेनाहृतेन किंचित्कोपेन ईषन्मन्युना रज्यन्ती रक्तीभवन्ती मुखश्रीराननशोभा यस्य तथोक्तः ।

समरशिरसि चञ्चत्पञ्चचूडश्चमूना-
मुपरि शरतुषारं कोऽप्ययं वीरपोतः ॥ २ ॥

आश्चर्यमाश्चर्यम् ।

मुनिजनशिशुरेकः सर्वतः सैन्यकाये
नव इव रघुवंशस्याप्रसिद्धः प्ररोहः ।
दलितकरिकपोलग्रन्थिटंकारघोर-
ज्वलितशरसहस्रः कौतुकं मे करोति ॥ ३ ॥

सुमन्त्रः—आयुष्मन्

अतिशयितसुरासुरप्रभावं
शिशुमवलोक्य तथैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे
धृतधनुषं रघुनन्दनं स्मरामि ॥ ४ ॥

चन्द्रकेतुः—मम त्वेकमुद्दिश्य भूयसामारम्भ इति हृदयमपत्रपते ।

---

षडक्षः कोऽप्यपूर्वोऽयं वीरपोतः वीरशिशुः अविरतं विश्रान्तिरहितं यथा तथा गुणे ज्यायां गुञ्जन्त्यौ अव्यक्तशब्दवत्यौ कोटी अग्रे यस्य तथोक्तेन कार्मुकेन । करणत्वात्तृतीया । समरशिरसि युद्धरङ्गे चमूनामुपरि शरतुषारं बाणवर्षं किरति । तुषारो हि अतिसूक्ष्मसलिलवृष्टिः । अत्र रज्यन्मुखश्रीः कार्मुकेण चञ्चत्पञ्चचूड इत्येतैः शरतुषारमित्यनेन च तडित्वतः शक्रचापयुक्तस्य स्खलिताम्रस्य मेघाङ्कशोरस्य च साम्यं व्यज्यते ॥ २ ॥ मुनिजनेत्यादि । एकः असहायः संप्रकोपात्प्रकृष्टमन्युना । लवकोपस्य तद्दृष्टाल्पत्वेऽपि चन्द्रकेतुबुद्ध्या महत्त्वारोपः । सर्वतः समन्ताद्दलितानां करिकपोलग्रन्थीनां संधीनां टंकारेण ज्वलनध्वनिना घोरं भयजनकं ज्वलितं शराणां सहस्रं यस्य तथोक्तम् । आनन्त्यवाची सहस्रशब्दः । नवः प्रत्यग्रः रघुवंशस्य अप्रसिद्धप्ररोह इव स्थितः अपख्याताङ्कुरवत्स्थितः मुनिजनशिशुर्मुनिजनाः शमप्रधानास्तेष्वपि बाल इत्यर्थः । मे कौतुकं हर्षं करोत्युत्पादयति ॥ ३ ॥ **अतिशयितेति** । तथैव तुल्यरूपम् । यथा रामेण तुल्यप्रभावस्तथैव तुल्याकार इत्यर्थः । तथाविधं कुशिकसुतमखद्विषां सुबाहुप्रभृतीनाम् । अत्र

अयं हि शिशुरेकक: समरभारभूरिस्फुर-
त्करालकरकन्दलीजटिलशस्त्रजालैर्बलैः ।
क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-
रमन्दमददुर्दिनद्विरदवारिदैरावृतः ॥ ५ ॥

**सुमन्त्रः**—वत्स एभिः समस्तैरपि किमस्य किं पुनर्व्यस्तैः ।

**चन्द्रकेतुः**—आर्य त्वर्यतां त्वर्यताम् । अनेन हि महानाश्रितजनप्रमाथोऽस्माकमारब्धः । तथा हि ।

आगर्जद्गिरिकुञ्जकुञ्जरघटानिस्तीर्णकर्णज्वरं
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वेल्लद्भैरवरुण्डमुण्डनिकरैर्वीरो विधत्ते भुवं
तृष्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव ॥ ६ ॥

**सुमन्त्रः**—( स्वगतम् । ) कथमीदृशेन सह वत्सस्य चन्द्रकेतोर्द्वन्द्वसंप्रहारमनुजानीमः । ( विचिन्त्य । ) अथवा इक्ष्वाकुकुलवृद्धाः खलु वयम् । प्रत्युपस्थिते रणे च का गतिः ।

---

**अयं हीति ।** अयमेकक: शिशुरेकाकी बाल: मदभरेण वीरपानेन समुपजनितमदातिशयेन भूरि अधिकं स्फुरन्ति चलितानि करालानि क्रूराणि करकन्दलीषु करशाखाग्रेषु जटिलानि निबिडानि शस्त्रजालानि येषां तथोक्तैः । क्वणन्तीभिः शब्दवतीभिः कनककिङ्किणीभिर्हेममयक्षुद्रघण्टिकाभिर्झणझणायितैः शब्दविशेषयुक्तैरमन्दमदैरतिशयितदानवारिभिर्दुर्दिनैरन्धकारितैर्द्विरदैर्गजैः कारणै डामरैः भयंकरैर्बलैः सैन्यैरावृतः ॥५॥ समस्तैः सहितैर्व्यस्तैः पृथक्स्थितैर्नालम् । न पर्याप्तिरित्यर्थः । आश्रितजनानामुपजीविजनानां प्रमाथः मारणम् । **आगर्जदिति ।** धीरोऽयं लवः अमन्ददुन्दुभिरवैरतिशयितभेरीशब्दैराध्मातं द्विगुणीकृतम् । आगर्जतां भयवशाद्गाढगर्जनं कुर्वतां गिरिकुञ्जकुञ्जराणां पर्वतगुहावर्तिगजानां घटायै पङ्क्तये निस्तीर्णो दत्तः कर्णज्वरो येन तथोक्तश्चासौ ज्यानिर्घोषस्तम् । उज्जृम्भयन्नुल्बणयन्सन् । वेल्लद्भिर्लुठद्भिर्भैरवैर्भयंकरैः । रुण्डखण्डानां शिरःकपालानां निकरैः समूहैर्भुवम् । तृष्यतः कालस्य पिपासितस्य कालस्य मृत्योः करालवक्त्रस्य विघसैर्भुक्तशिष्टैः । 'विघसौ यज्ञशेषभोजनशेषयोः' इत्यमरः । व्याकीर्यमाणामिव संस्तीर्यमाणामिव विधत्ते करोति । तृष्यदित्यनेन पिपासयान्यपरेण मृत्युना अर्धजग्धानि मुक्तानीति व्यज्यते ॥ ६ ॥

चन्द्रकेतुः—( सविस्मयलज्जासंभ्रमम् । ) हन्त धिक् । प्रतिनिवृत्ता-न्येव सर्वतः सैन्यानि मम ।

सुमन्त्रः—( रथवेगमभिनीय । ) आयुष्मन् एष ते वाग्विषयी-भूतः स वीरः ।

चन्द्रकेतुः—( विस्मृतिमभिनीय । ) आर्य किमस्य नामधेयमा-ख्यातमाह्वायकैः ।

सुमन्त्रः—लव इति ।

चन्द्रकेतुः—

भो भो लव महाबाहो किमेभिस्तव सैनिकैः ।
एषोऽहमेहि मामेव तेजस्तेजसि शाम्यतु ॥ ७ ॥

सुमन्त्रः—कुमार पश्य पश्य ।

विनिवर्तित एष वीरपोतः
पृतनानिर्मथनात्त्वयोपहूतः ।
स्तनयित्नुरवादिभावलीना-
मवमर्दादिव दृप्तसिंहशावः ॥ ८ ॥

( ततः प्रविशति धीरोद्धतपरिक्रमो लवः । )

लवः—साधु राजपुत्र साधु । सत्यमैक्ष्वाकः खल्वासि । तदहं परागत एवास्मि ।

( नेपथ्ये महान्कलकलः । )

लवः—( सावष्टम्भं परावृत्य । ) आः कथमिदानीं भग्ना अपि

---

नेन विमृश्यकारित्वमवश्यमिति व्यज्यते । अत्र प्रकाशानुक्तिश्चिन्त्या ॥ अपावृत्तानि पराङ्मुखीभूतानि ॥ आह्वायकैः आह्वानं कुर्वद्भिः । भो भो इति । तेजः शौर्यं तेजसि शाम्यतु निर्वाणं भवतु ॥ ७ ॥ विनिवर्तित इति । पृतनानिर्मथनात्सेनाप्रहारात् । अपादाने पञ्चमी । उपहूत आहूतः । स्तनयित्नुरवात् मेघध्वनेः सिंहशावः सिंहशिशुरिव निवर्तित इत्येतत्पश्येत्यर्थः ॥ ८ ॥ ततः प्रविशतीति । धीरोद्धतस्य युधयुद्धटस्य पराक्रमो ...

अयं शैलाघातक्षुभितवडवावक्त्रहुतभु-
क्प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु मे ।
समन्तादुत्सर्पन्घनतुमुलसेनाकलकलः
पयोराशेरोघः प्रलयपवनास्फालित इव ॥ ९ ॥

(सवेगं परिक्रामति ।)

चन्द्रकेतुः—भो भोः कुमार

अत्यद्भुतादसि गुणातिशयात्प्रियो मे
तस्मात्सखा त्वमसि यन्मम तत्तवैव ।
तत्किं निजे परिजने कदनं करोषि
नन्वेष दर्पनिकषस्तव चन्द्रकेतुः ॥ १० ॥

लवः—(सहर्षसंभ्रमं परावृत्य ।) अहो महानुभावस्य प्रसन्नक-र्कशा वीरवचनप्रयुक्तिर्विकर्तनकुलकुमारस्य । तत्किमेभिरेनमेव ताव-त्संभावयामि । ( पुनर्नेपथ्ये कलकलः ।)

लवः—(सक्रोधनिर्वेदम् ।) आः कदर्थितोऽहमेभिर्वीरसंवादवि-घ्नकारिभिः पापैः । (तदभिमुखं परिक्रामति । )

चन्द्रकेतुः—आर्य आर्य दृश्यतां द्रष्टव्यमेतत् ।

समीपस्थिता भवन्ति । 'अवाच्चालम्बनाविदूर्ययोः' इति षत्वम् । अयं शैलेत्यादि । अयमोघः युष्माकं समूहः शैलाघातेन मन्दरसंघट्टनेन क्षुभितो विपर्यस्तः सः वडवावक्त्रहुतभुग्वाडवमुखाग्निस्तद्वत्प्रचण्डस्य तीक्ष्णस्य क्रोधार्चिर्निचयस्य कोपाग्निज्वालासमूहस्य कवलत्वं भक्ष्यत्वं व्रजतु । क इवेत्याह—पयोराशेरोघः प्रवाह इवेत्यर्थः ॥ ९ ॥ अत्यद्भुतादिति । मम त्वं सखा तस्मान्मदीयं युद्धस्तु तत्तवैव त्वदीयमेव ॥ तन्निजे परिजने किमर्थमेवं कदनं युद्धं करोषि । तव दर्पपरीक्षास्थानमेष चन्द्रकेतुरित्यर्थः॥१०॥ प्रसादवती कर्कशा च कठिना च । आपाततो हृद्या पर्यालोचने तु कठिनेत्यर्थः । वीरवचनप्रयुक्ति-र्वीरवादप्रयोगः । संभावयामि पुरस्करोमि ॥ कदर्थीकृतः अनुचितव्यापारवान्कृतः । वीरसंवादस्य चन्द्रकेतोरुक्तिप्रयुक्तिकायाः युद्धस्य वा ॥

१ प्रतिनिवृत्ताः पृष्ठानु० २ पर्यवष्टभ्य निघ्नन्ति. ३ ०घन; बल; सेना—हेला. ४ अपि. ५ कदर्थीकृतः ६ एभिर्नीरवारं विघ्नकारिभिरिति.

पश्चाद्व रनुसृतोऽयमुदीर्णधन्वा ।
द्वेधा समुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम् ॥ ११ ॥

सुमन्त्रः—कुमार एवैनं द्रष्टुमपि जानाति । वयं तु केवलं परवन्तो विस्मयेन ।

चन्द्रकेतुः—भो भो राजानः

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वत्रैकस्मिन्कवचनिचितैर्मध्यचर्मोत्तरीये ।
कालज्येष्ठैरभिलषितवयःकाम्यकार्ये भवद्भि-
र्योऽयं बद्धो युधि परिकरस्तेन धिग्वो धिगस्मान् ॥१२॥

लवः—( सोन्माथम् । ) आः कथमनुकम्पते नाम । ( विचिन्त्य । ) भवतु । कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत्सैन्यानि संस्तम्भयामि । ( इति ध्यानं नाटयति । )

सुमन्त्रः—तत्किमकस्मादस्मत्सैन्यघोषः प्रशाम्यति ।

लवः—पश्याम्येनमधुना प्रगल्भम् ।

---

दर्पेणेति । कौतुकवता सामर्थ्यदर्शनेच्छायुक्तेन दर्पेण बलेन मयि बद्धलक्ष्यः दत्तचक्षुर्मयि व्यवसितलक्ष्यत्ववान् । उदीर्णधन्वा उत्क्षिप्तचापः । द्वेधा मयि बले चाभिमुखोऽयं लवः द्वेधा समुद्धतस्य चलितस्य मघवत्संबन्धिचापधरस्य वर्षाकालमेघस्य लक्ष्मीं श्रियं धत्ते ॥ ११ ॥ संख्येति । संख्यातीतैरसंख्येयैः । द्विरदतुरगस्यन्दनेषु तिष्ठन्तीति द्विरदतुरगस्यन्दनस्थास्तथाविधैः कवचनिचितैर्वारबाणपिहितैः । अपरवयसि वार्धके ख्यातिकामैः विजयप्रशस्तिकामनावद्भिः कालज्येष्ठैर्वयोधिकैः । न तु शौर्येणेत्यर्थः । भवद्भिरेकस्मिन्नसहाये पदातौ पादचारिणि नद्धचर्मोत्तरीयेऽस्मिन् शिशौ विषये योऽयं समभरः एकौघभारः बद्धः तेन वः धिक् । युष्माकमवयवधानेन निन्दा, अस्माकं तु युष्मद्द्वारा ॥ १२ ॥ अनुकम्पते मम दौर्बल्यमाशङ्क्य मद्दुःखं परिजिहीर्षति । कालहरणप्रतिषेधाय कालयापननिवृत्तये संस्तम्भयामि निवृत्तव्यापाराणि करोमि ॥ प्रशाम्यन्ति विरमन्ति ॥ प्रगल्भं प्रौढम् । आमन्त्रितमाहूतम् ॥ कः संदेहः । आमन्त्रित इत्यत्र संशयः क इत्यर्थः ।

सुमन्त्रः—(ससंभ्रमम् ।) वत्स मन्ये कुमारकेणानेन जृम्भकास्त्रमामन्त्रितमिति ।

चन्द्रकेतुः—अत्र कः संदेहः ।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति ।
अथ लिखितमिवैतत्सैन्यमस्पन्दमास्ते
नियतममितवीर्यं जृम्भते जृम्भकास्त्रम् ॥ १३ ॥

आश्चर्यमाश्चर्यम् ।

पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभो जृम्भकै-
रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः ।
कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवस्तीर्यते
मीलन्मेघतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥ १४ ॥

सुमन्त्रः—कुतः पुनरस्य जृम्भकाणामागमः स्यात् ।

चन्द्रकेतुः—भगवतः प्राचेतसादिति मन्यामहे ।

सुमन्त्रः—वत्स नैतदेवमस्त्रेषु विशेषतो जृम्भकेषु । यतः ।

कृशाश्वतनया ह्येते कृशाश्वात्कौशिकं गताः ।
अथ तत्संप्रदायेन रामभद्रे स्थिता अपि ॥ १५ ॥

---

मन्ये इत्यस्य संभावनावाचित्वात्तस्याश्चातिकोटिकसंशयरूपत्वात् । व्यतिकर इति । तमःसंबन्धी तामसः विद्युत्सबन्धी वैद्युतश्च । तथाविधो व्यतिकरः संपर्कः प्रणिहितमपि प्रयत्नेन निक्षिप्तमपि । ग्रस्तं च तन्मुक्तं च । खञ्जकुब्जादिवत्समासः । तमसा ग्रस्तं ज्योतिषा मुक्तम् । तमस्यसत्कल्पत्वाद्ग्रस्तत्वं ज्योतिषि च कार्यकरत्वात्ततो मुक्तत्वम् । चक्षुर्हिनस्ति बाधते । नियतं निश्चितम् ॥ १३ ॥ आश्चर्यमभूतपूर्वम् । पातालेति । पातालोदरमेव कुञ्जः गुहा तस्मिन्पुञ्जितानि संहतभावं प्राप्तानि यानि तमांसि तद्वत् श्यामैः । उत्तप्तं स्फुरत्तेजिष्ठं च यदारकूटं त्रपुधातुविशेषस्तस्य यत्कपिलं पिशङ्गं ज्योतिस्तद्वज्ज्वलद्दीप्तिभिः । अत एव कल्पाक्षेपे कल्पावसाने कठोरेण दृढेन भैरवेण भीतिजनकेन मरुता व्यस्तैर्वियोजितैर्लीनाम्भोदानि तडित्कडाराणि च कुहराणि एषां तथोक्तैः । कडारः कपिलः । विन्ध्याचलशृङ्गैरिव स्थितैः जृम्भकैर्नभः अभिस्तीर्यते आच्छाद्यते ॥ १४ ॥ कुतः पुनः कस्मात्पुरुषात्पुनरस्य लवस्य ॥ मन्त्रेषु विषये एतदागम मेवं न त्वन्मतरीत्या न घटते जृम्भकास्त्रेषु विषये

चन्द्रकेतुः—अपरेऽपि प्रचीयमानसत्त्वप्रकाशाः स्वयं सर्वे मन्त्रदृशः पश्यन्ति ।

सुमन्त्रः—वत्स सावधानो भव । परागतः प्रवीरः ।

कुमारौ—(अन्योन्यं प्रति ।) अहो प्रियदर्शनः कुमारः । (सस्नेहानुरागं निर्वर्ण्य ।)

यदृच्छासंवादः किमु किमु गुणानामतिशयः
पुराणो वा जन्मान्तरनिबिडबद्धः परिचयः ।
निजो वा संबन्धः किमु विधिवशात्कोऽप्यविदितो
ममैतस्मिन्दृष्टे हृदयमवधानं रचयति ॥ १६ ॥

सुमन्त्रः—भूयसां जीविधर्म एष यद्रसमयी कस्यचित्क्वचित्प्रीतिः यत्र लौकिकानामुपचारस्तारामैत्रकं चक्षूराग इति । तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति ।

---

हीति प्रसिद्धेः । कौशिकं विश्वामित्रम् । अथानन्तरं तत्संप्रदायेन विश्वामित्रोपदेशेन ॥ १५ ॥ अपरेऽपि भवदुक्तेभ्योऽन्येऽपि प्रचीयमानसत्त्वप्रकाशाः व्याप्रुवत्संवित्प्रकाशाः । मन्त्रदृशः स्वयमेव संप्रदायेन विनापि ॥ सावधानोऽनन्यमनाः भव ॥ कुमारौ लवचन्द्रकेतू । प्रियं सुखजनकं दर्शनं यस्य तथोक्तः । स्नेहः मैत्री । अनुरागो भोग्यताज्ञानम् । यदृच्छेति । यदृच्छया दैवेन संवादः समागमः यस्य तथोक्तः । यदृच्छया दैवेन संवाद एकरूपं यस्य तथोक्तो वा । रामादिगुणगणैरेकरूप इति हृदयम् । तथाविधो गुणगणानामतिशयः किमु । पुराणः पुरापि भवः । जन्मान्तरेष्वन्येषु जन्मसु निबिडबद्धः दृढारूढः परिचयो वासना किमु । विधिवशाद्दैवेच्छया अविदितः कोऽपि निजः संबन्धः जननसंबन्धः किमु । यत एवं ततो हृदयं कर्तृ अवधानं व्यापारान्तररहिततां रचयति करोति । अथवा एतस्मिन्दृष्टे सति मम हृदयं कर्म गुणातिशयादिषु त्रिषु अन्यतमावधानता अवधानं अवहितं करोतीति द्विकर्मणि च त्युडित्यप्याहुः ॥ १६ ॥ भूयसामित्यादि । यत्र यस्यां प्रीतौ । तारामैत्री मैत्री तारा कनीनिका प्रेम वा चक्षूरागः । आदराद्वीक्षणम् । 'चक्षुःप्रीतिर्भवेद्यत्र' इत्युक्तचक्षूराग इति च लौकिकानां जनानामुपचारो व्यवहारस्तादृशी कस्यचित्पुरुषस्य क्वचित्पुरुषे स्वरसमयी अकुरसा अकृतिमा वा

स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति ॥ १७ ॥

**कुमारौ**—( अन्योन्यमुद्दिश्य । )

एतस्मिन्मसृणितराजपट्टकान्ते
मोक्तव्याः कथमिव सायकाः शरीरे ।
यत्प्राप्तौ मम परिरम्भणाभिलाषा-
दुन्मीलत्पुलककदम्बमङ्गमास्ते ॥ १८ ॥

किं त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना
शस्त्रेणापि हि तेन किं न विषयो जायेत यस्येदृशः ।
किं वक्ष्यत्ययमेव युद्धविमुखं मामुद्यतेऽप्यायुधे
वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥ १९ ॥

**सुमन्त्रः**—( लवं निर्वर्ण्य सास्रमात्मगतम् । ) हृदय किमन्यथा परिकल्पसे ।

मनोरथस्य यद्बीजं तद्दैवेनादितो हृतम् ।
लतायां पूर्वलूनायां प्रसवस्योद्भवः कुतः ॥ २० ॥

---

प्रमाणं यथार्थानुभवविषयमामनन्ति असकृद्वदन्ति । अहेतुरिति । यः अहेतुर्निष्कारणकः पक्षपातः आत्मीयत्वप्रतिसंधानमूलकानुकूलज्ञानरूपस्तस्य अहेतुकपक्षपातस्य प्रतिक्रिया निवर्तकव्यापारः नास्ति न संभवति । स्नेहात्मकः प्रेममयः स तन्तुः भूतानि प्राणिनः अन्तः सीव्यति अन्तःस्यूतानि करोति ॥ १७ ॥ एतस्मिन्निति । राजपट्टे नीलरक्तपट्टवस्त्रे तद्वत्कान्ते कमनीये एतस्मिन् लवे चन्द्रकेतौ वा परिरम्भणाभिलाषादालिङ्गनेच्छया । उन्मीलत्पुलककदम्बमुद्यद्रोमाञ्चनिकुरम्बम् ॥ १८ ॥ किं त्विति । किंच पूर्वोक्तादन्यत् । आक्रान्तकठोरतेजसि आक्रान्तं प्राप्तं कठोरं पूर्णं तेजः पराभिभवनसामर्थ्यं यस्य तस्मिन्विषये शस्त्रं विना का गतिः शस्त्रसाधनकयुद्धात्किं किं कर्तव्यम् । न किमपीत्यर्थः । तर्हि शरीरसौभाग्यानुरोधेन शस्त्रन्यासः क्रियतामित्यत्राह—शस्त्रेणेति । यस्य शस्त्रस्य विषय ईदृशः महावीरः न जायेत तेन शस्त्रेणापि किम् । न किमपीत्यर्थः । तर्हि सौकुमार्यवीर्ययोः प्राबल्यदौर्बल्यविचारेण सौकुमार्यानुसारेण शस्त्रन्यासः क्रियतामित्यत आह—उद्यतेऽप्यायुधे युद्धविमुखं मामयमेव किं वक्ष्यति यत एवं ततः दारुणरसः क्रौर्यैकवेषः शूराणां समयः आचारः स्नेहक्रमं स्नेहव्यापारपरिपाटीं बाधते निवर्तयति ॥ १९ ॥ अन्यथा संभाव्यविषयानुसारेण परिप्लवसे चञ्चलीभवसि । रामसा-

चन्द्रकेतुः—अवतराम्यार्य सुमन्त्र स्यन्दनात् ।

सुमन्त्रः—तत्कस्य हेतोः ।

चन्द्रकेतुः—एकतस्तावदयं वीरपुरुषः पूजितो भवति । अपि च खल्वार्य क्षात्रधर्मः समनुगतो भवति । न रथिनः पादचारमभियुञ्जन्तीति शास्त्रविदः परिभाषन्ते ।

सुमन्त्रः—( स्वगतम् । ) आः कष्टां दशामनुप्रपन्नोऽस्मि ।

कथं न्याय्यमनुष्ठानं मादृशः प्रतिषेधतु ।
कथं वाभ्यनुजानातु साहसैकरसां क्रियाम् ॥ २१ ॥

चन्द्रकेतुः—यदा तातमिश्रा अपि पितुः प्रियसखमर्थसंशये-ष्वार्यमेव पृच्छन्ति तत्किमार्यो विमृशति ।

सुमन्त्रः—आयुष्मन् एवं यथाधर्ममभिमन्यसे ।

एष साङ्ग्रामिको न्याय्य एष धर्मः सनातनः ।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः ॥ २२ ॥

चन्द्रकेतुः—अप्रतिरूपं वचनमार्यस्य ।

---

अभिलष्यमाणलवनिष्ठरामपल्यत्वस्य यद्वीजं सीतारूपं तदादितो हतं गर्भिणीदशायामेव नष्टम् । ' लूनपूर्वायाम् ' इति पाठे पूर्वं लूना छिन्ना तथाविधायाम् । भूतपूर्वनिर्देशात् लूनशब्दस्य पूर्वनिपातः ' पूर्वलूनायाम् ' इति पाठे तु पूर्वस्मिन् काले लूनेत्यर्थः । प्रसवस्य पुष्पस्य ॥ २० ॥ वीरपुरुषः लवः पूजितस्तावद्भवति । द्वयोरवतरणप्रयोजनयोः प्रथमं वीरपुरुषपूजा भवति । क्षत्रधर्मः खल्वपि परिपालितोऽनुष्ठितो भवति । पादचारं पदातिं रथिनो नाभियुञ्जन्तीति शास्त्रविदः क्षत्रधर्मप्रतिपादकार्थशास्त्रज्ञाः परिभाषन्ते नियच्छन्ति ॥ कथं हीति । इदमनुष्ठानं राजपुत्रस्य रथादवतरणं प्रतिषेधतु निषिद्ध्यात् । निवर्तयेदित्यर्थः । साहसैकरसां साहसप्रकृत्येकवेषां क्रियां अनुष्ठानमभ्यनुजानातु अनुमन्येत ॥ २१ ॥ तातमिश्रा अपि । मिश्रशब्दः पूज्यवाची । रामादयोऽपि अर्थसंशयेषु अनुष्ठेयानुष्ठेयसंदेहेषु पितुः प्रियसखं दशरथप्रियसखं त्वां पृच्छन्ति जिज्ञासां बोधयन्ति ॥ यथाधर्मं क्षत्रधर्मानतिक्रमेण । एष इति । सङ्ग्रामे भवः साङ्ग्रामिकः । एष वीरपुरुषपूजारूपः न्याय्यः उचितः । एष धर्मः क्षत्रधर्मपरीपालनरूपः सनातनश्चिरंतनः । इयं

भवन्त एव जानन्ति रघूणां च कुलस्थितिम् ॥ २३ ॥

सुमन्त्रः—( सस्नेहास्रं परिष्वज्य )

जातस्य ते पितुरपीन्द्रजितो निहन्तु-
र्वत्सस्य वत्स कति नाम दिनान्यमूनि ।
तस्याप्यपत्यमनुतिष्ठति वीरधर्मं
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥ २४ ॥

चन्द्रकेतुः—( सकष्टम् । )

अप्रतिष्ठे कुलज्येष्ठे का प्रतिष्ठा कुलस्य नः ।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे ॥ २५ ॥

सुमन्त्रः—अहह हृदयमर्मदारणान्येव चन्द्रकेतोर्वचनानि ।

लवः—हन्त मिश्रीकृतो रसक्रमो वर्तते ।

यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी
तथैवास्मिन्दृष्टिर्मम कलहकामः पुनरयम् ।

---

निस्तुलम् । इतिहासमिति । इतिहासं रामायणभारतादिकम् । पुराणम् 'सर्गश्च प्रतिसर्गश्च इत्याद्युक्तलक्षणकम् । धर्माः नित्यनैमित्तिकादयः प्रोच्यन्ते प्रकाश्यन्ते । एभिरित्यर्थे 'करणाधिकरणयोश्च' इति ल्युट् । मन्वादिस्मृतयस्ता इत्यर्थः । कुलस्थितिं कुलमर्यादाम् ॥ २३ ॥ जातस्येति । वत्स चन्द्रकेतो पितुर्जातस्य त्वत्पितुरस्मच्छिशोरिन्द्रजितो निहन्तुर्वत्सस्य लक्ष्मणस्य अमूनि दिनानि एतावान् जीवितकाल इति यावत् । कति नाम कियन्ति नाम यद्वा वत्सस्य जातस्यामूनि दिनानि कतिनामेत्यन्वयः । वत्सस्य लक्ष्मणस्य यज्जातं जन्म तत्संबन्धिदिनानि । जन्मप्रभृतिदिनानीत्यर्थः । तस्याप्यपत्यं कर्तृ वीरधर्ममनुतिष्ठति अनुष्ठितं करोति । प्रतिष्ठामागतमास्पदं प्राप्तं माहात्म्यं प्राप्तम् । 'प्रतिष्ठा स्थितिमाहात्म्ये' इति यादवः । दिष्ट्येत्यानन्दे ॥ २४ ॥ अप्रतिष्ठे इति । कुलज्येष्ठे रामे अप्रतिष्ठे अनास्पदे । अनपत्ये । सतीति यावत् । त्रयः पितरः लक्ष्मणभरतशत्रुघ्नाः ॥ २५ ॥ हृदयमर्मणां हृदयमध्यप्रदेशानां दारणानि छेदकानि दुःखजनकानीत्यर्थः । यथेति । कुमुदिनी कुमुद्वती सरस्योषधिर्वा इन्दौ चन्द्रे समुपोढे सति समुपागते सति यथानन्दं संतोषं व्रजति तथा मम दृष्टिरस्मिन् चन्द्रकेतौ समुपोढे सति आनन्दं व्रजति । एवकारः सादृश्यद्योतनार्थः । रणत्कारेण रणदिति शब्देन क्रूरं भयंकरं क्वणितं

वादयते ।

सुमन्त्रः—

अर्जितं पुण्यमूर्जस्वि ककुत्स्थस्येव ते महः ।
श्रेयसे शाश्वतो देवो वराहः परिकल्पताम् ॥ २७ ॥

अपि च ।

देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पिता
त्वां मैत्रावरुणोऽभिनन्दतु गुरुर्यस्ते गुरूणामपि ।
ऐन्द्रावैष्णवमाग्निमारुतमथो सौपर्णमोजोस्तु ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ॥२८॥

लवः—कुमार अति हि नाम शोभसे रथस्थ एव । कृतं कृतमत्यादरेण ।

चन्द्रकेतुः—तर्हि महाभागोऽप्यन्यं रथमलंकरोतु ।

लवः—आर्य प्रत्यारोपय रथोपरि राजपुत्रम् ।

---

कृत प्रेमा कृता प्रीतिर्येन तथोक्तः । विकचानि विस्तृतानि विकरालानि अतिदृढानि व्रणानि मुखे अग्रे यस्य तथोक्तः । अयं मम बाहुः पुनः बाहुस्तु । दृष्टिवैषम्यार्थः पुनःशब्दः । कलहकामः युद्धकाङ्क्षी । भवतीत्यर्थः । अतो रतिक्रोधस्थायिकयोः शृङ्गारवीरयोर्मेलनान्मिश्रितयोः रसयोः क्रमः परिपाटिर्वर्तत इति पूर्वेण संबन्धः । ‘ पुंसादं मनसा ययुः ’ इति न्यायेन कुमुदिनीदृष्टान्तात् शृङ्गाररसोत्पत्तिरिति द्रष्टव्यम् ॥ २६ ॥ अहितस्यैवानभिमतस्यैव पराभवायावमानायादिवराहः प्रलयार्णवमग्नभूमेरुद्धर्ता वराहरूपेणावतीर्णो भगवान् कल्पतां तस्मिन् समर्थो भवतु । देव इति । देवः सविता सूर्यः धिनोतु प्रीणयतु । मैत्रावरुणः वसिष्ठस्त्वाभिनन्दतु । इन्द्रस्य विष्णोश्च इदं ऐन्द्रावैष्णवम् । ‘ देवताद्वन्द्वे च ’ इति आनङ् । अग्नेर्मारुतस्य चेदमाग्निमारुतम् । ‘ इद्वृद्धौ ’ इति इत् । सौपर्णं गरुडदेवत्वमोजः पराक्रमः । ज्याघोष एव मन्त्रः । जयं पराभिभवं देयाद्दद्यात् । एतैर्लिङ्गैस्त्येत्वम् ॥ २७ ॥ शोभसे हृद्यो भवसि । अत्यादरेण कृतम् । अवरोहणं न कार्यमिति भावः ॥ तर्हि मदवरोहणे अनिष्टे । प्रत्यारोपय आरोपय । राजपुत्रं चन्द्रकेतुम् । त्वमप्यनुरुद्ध्यस्व यथा चन्द्रके-

---

१ र–झ–णत्कार. २ विकरालव्रणमुखः. ३ अपमसृतैक्ष्वाकः. ४ पुण्यमोजस्वि.
The Com. reads for the sloka–अहितस्यैव पराभवाय महानादिवराहः कल्पताम् ।

**सुमन्त्रः**—त्वमप्यनुरुद्ध्यस्व वत्सस्य चन्द्रकेतोर्वचनम् ।

**लवः**—को विचारः स्वेषूपकरणेषु । किं त्वरण्यसदो वयमनभ्यस्तरथचर्याः ।

**सुमन्त्रः**—जानासि वत्स दर्पसौजन्ययोर्यथोचितमाचरितुम् । यदि पुनस्त्वामीदृशमैक्ष्वाको राजा रामभद्रः पश्येत्तदा तस्य स्नेहेन हृदयमभिष्यन्देत ।

**लवः**—आर्य सुजनः स राजर्षिः श्रूयते । ( सलज्जमिव । )

**वयमपि न खल्वेवंप्रायाः क्रतुप्रतिघातिनः**
**क इह न गुणैस्तं राजानं जनो बहु मन्यते ।**
**तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां**
**विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाकरोत् ॥ २९ ॥**

**चन्द्रकेतुः**-( सस्मितम् ) किं नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः ।

**लवः**—अस्त्विहामर्षो माभूद्वा । एतत्तु पृच्छामि दान्तं हि राजानं राघवं शृणुमः । स किल नात्मना दृप्यति नास्य प्रजा वा दृप्ता जायन्ते । तत्किं मनुष्यास्तस्य राक्षसीं वाचमुदीरयन्ति ।

---

तुस्त्वद्वचनं रथादनवरोहणेनानुरोधितवान् तथा त्वमपि तद्वचनं रथारोहणेनानुसर ॥ स्वेषु स्वीयेषूपकरणेषु रथादिषु । अरण्ये सीदन्ति वसन्तीत्यरण्यसदः । 'सत्सूद्विष–' इत्यादिना क्विप् । अनभ्यस्तरथचर्याः अपरिचितरथगतयः ॥ दर्पसौजन्ययोः यदाचरितं पराक्रमसख्यगत्यानुगुणो य आचारस्तम् जानासीत्यर्थः । अयं लवः अस्य रामभद्रस्य हृदयमभिष्यन्दयेत् द्रवयेत् ॥ **यदि चेति** । वयमहं क्रतुद्विषतां यज्ञादिघातुकानामरौ शासितरि रामभद्रविषये एवंप्राया यदि प्रेमपात्रभूताश्चेत्क इव को वा तं राजानं रञ्जकं तं रामभद्रं गुणैः शीलादिभिः हेतुभिः न बहु मन्यते । सर्वोऽपि तं संभावयतीत्यर्थः । सौजन्यस्य को विरोध इत्यत्राह—तदपि तथापि अखिलक्षत्राक्षेपः सकलराजतिरस्कारस्तेन प्रचण्डतया क्रूरतया तुरङ्गमरक्षिणामश्वमेधाश्वरक्षकाणां विकृतिं मन्युं स व्याहारश्च 'तां पताकां हरामि वः' इत्यादिकः । अथवा तुरङ्गमरक्षिणां व्याहारः सप्तलोकैकवीरस्येत्युक्तिः मे विकृतिं मन्युमकरोत् ॥ २८ ॥ दृप्ता न जायन्ते । राक्षसीं वाचं दृप्तवाचम् । तदाह—

**ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः ।**
**सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः ॥३०॥**

इति ह स्म तां निन्दति । अथेतरामभिष्टुवन्ति ।

**कामान्दुग्धे विप्रकर्षत्यलक्ष्मीं**
**कीर्तिं सूते दुष्कृतं या हिनस्ति ।**
**तां चाप्येतां मातरं मङ्गलानां**
**धेनुं धीराः सूनृतां वाचमाहुः ॥ ३१ ॥**

**सुमन्त्रः**—परिपूतस्वभावोऽयं बत कुमारः प्राचेतसान्तेवासी । वदत्ययमभ्युपपन्नमर्षेण संस्कारेण ।

**लवः**—यत्पुनश्चन्द्रकेतो वदसि किं नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्ष इति तत्पृच्छामि किं व्यवस्थितविषयः क्षत्रधर्म इति ।

**सुमन्त्रः**—नैव खलु जानासि देवमैक्ष्वाकं येनैवं वदसि । तद्विरमातिप्रसङ्गात् ।

**सैनिकानां प्रमाथेन सत्यमोजायितं त्वया ।**
**जामदग्न्यस्य दमने न हि निर्बन्धमर्हसि ॥ ३२ ॥**

**लवः**—( सहासम् । ) आर्य जामदग्न्यस्य दमनः स राजेति कोऽयमुच्चैर्वादः ।

---

**ऋषय इति** । योनिः कारणम् । निर्ऋतिः परिभवहेतुः ॥ २९ ॥ इतरां वक्ष्यमाणाम् । **कामानिति** । काममभिलषितं दुग्धे प्रपूरयति । अलक्ष्मीं विप्रकर्षति दूरीकरोति । कीर्तिं गुणवत्ताप्रथां सूते जनयति । दुर्हृदः शत्रून् निष्प्रलाति अतिशयेन नाशयति । सूनृता वागिति शेषः । शुद्धां दोषशून्यां शान्तां कार्कश्यरहितां मङ्गलानां मातरं हेतुं धेनुं स्वरूपेणाभोग्यां धीराः ध्यानशीलाः सूनृतां शुद्धामाहुरिति योज्यम् । इतीतरामभिष्टुवन्तीति पूर्वेणान्वयः ॥ ३० ॥ अभ्युपपन्नामर्षेण उत्पन्नासहनेन संस्कारेण वासनया ॥

सिद्धं ह्येतद्वाचि वीर्यं द्विजानां
बाह्वोर्वीर्यं यत्तु तत्क्षत्रियाणाम् ।
शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन्दान्ते का स्तुतिस्तस्य राज्ञः ॥ ३३ ॥

चन्द्रकेतुः—( सोन्माथमिव । ) आर्य सुमन्त्र कृतमुत्तरोत्तरेण ।

कोऽप्येष संप्रति नवः पुरुषावतारो
वीरो न यस्य भगवान्भृगुनन्दनोऽपि ।
पर्याप्तसप्तभुवनाभयदक्षिणानि
पुण्यानि तातचरितान्यपि यो न वेद ॥ ३४ ॥

लवः—को हि रघुपतेश्चरितं महिमानं च न जानाति । यदि नाम किंचिदस्ति वक्तव्यम् । अथवा शान्तम् ।

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते
सुन्दस्त्रीमथनेऽप्यकुण्ठयशसो लोके महान्तो हि ते ।
यानि त्रीण्यपराङ्मुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ ३५॥

---

विषये । निर्बन्धं रूक्षवादम् ॥ ३१ ॥ **सिद्धमिति** । द्विजानां विप्राणां वाचि वीर्यं पराभिभवनसामर्थ्यमिति यत् क्षत्रियाणां बाह्वोर्वीर्यमिति यत् । एतत्सिद्धं प्रसिद्धं किल । जामदग्न्यः शस्त्रग्राही ब्राह्मणः । तस्मिन्दान्ते तस्य राज्ञः तद्दमनकरामभद्रस्य स्तुतिः गुणाभिधानिका का । न किमपीत्यर्थः ॥ ३२ ॥ **कोऽपीति** । यस्य परशुरामश्च वीरो न । यज्ज्ञानाविषयवीरत्ववान् भृगुनन्दनः । यः पुरुषः सप्तानां भुवनानां समाहारः सप्तभुवनं तस्याभयं भयनिवारणं तदेव दक्षिणा प्रत्युपकारनिरपेक्षं स्वाभ्युदयमुद्दिश्य दानं । सा पर्याप्ता पूर्णा येषु तथोक्तानि तातचरितानि पुण्यानि रामभद्रवृत्तलक्षणगुम्फकर्माणि शुभकर्माणि तथा तु न वेद न जानाति । एष नवः पुरुषावतारः कोऽपि । क्षेपेऽयं किंशब्दः । अत्र रामचरितलक्षणक्रतूनां जगदभयदानमेव दक्षिणेति वर्णनाद्रूपकालंकारः ॥ ३६ ॥ यदि नाम किंचिदस्ति वक्तव्यम् । वक्तव्यं किंचिदस्ति किमित्यर्थः । **वृद्धा इति** । अविचारणीयचरितास्ते वृद्धास्तिष्ठन्तु । वयोमात्रं तेषां गौरवहेतुरिति भावः । सुन्दस्त्रीमथने ताटकावधेऽपि अकुण्ठयशसः अप्रतिहतकीर्तयः । कुतोमुखानि पराङ्मुखानि पदानि पदन्यासपराङ्मुखानीति वचा वक्तमपि जुगुप्सया कुतोमुखानीत्युक्तम् ।

चन्द्रकेतुः—आः तातापवादभिन्नमर्याद अति हि नाम प्रगल्भसे ।

लवः—अये मय्येव भ्रुकुटीधरः संवृत्तः ।

सुमन्त्रः—स्फुरितमनयोः क्रोधेन । तथा हि ।

चूडामण्डलबन्धनं तरलयत्याकूतजो वेपथुः
किंचित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः ।
धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्त्रं भ्रुवो-
श्चन्द्रस्योद्भटलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च ॥३६॥

कुमारौ—तदितो विमर्दक्षमां भूमिमवतरावः ।

( इति निष्क्रान्ताः सर्वे । )

पंचमोऽङ्कः ।

---

भद्रश्चापकर्षणार्थं पदत्रयं निवृत्य तं जघानेति प्रसिद्धिः । इन्द्रसूनुर्निधने वालिवधे यत्कौशलं नैपुण्यमन्तर्धानपूर्वकत्वरूपं तत्राप्यभिज्ञो जनः वर्तते । हुमिति परिहासे ॥ ३४ ॥ तातापवादिन् रामभद्रविषयदोषवादिन् । भिन्नमर्याद अतिक्रान्तसमुदाचार ॥ भ्रुकुटीमुखः क्रोधप्रयुक्तभ्रूभङ्गयुक्तवदनः ॥ अनयोर्लवचन्द्रकेत्वोः । **क्रोधेनेति** । उद्धता धूताश्चलन्तः कुन्तलाः केशभराः यस्मिन् स तथोक्तः । कोकनदच्छदस्य रक्तारविन्दपत्रस्य रज्यतः रक्तीभवतः । भ्रुवोर्भङ्गेन भीमम् । अनयोरिदं वक्त्रं च । उद्भटलाञ्छनस्य प्रकटलक्ष्मणः चन्द्रस्य उद्भ्रान्तभृङ्गस्य कमलस्य च कान्तिं धत्ते । वक्त्रमित्येकवचनोक्तिः संतानैकप्रयुक्तात्यन्तसारूप्यद्योतनाय । निदर्शनालङ्कारः ॥ ३५ ॥ एह्यागच्छ । विमर्दक्षमां युद्धयोग्यां भूमिमवतरावः । इति निष्क्रान्ताः सर्वे ॥

वाधूलवंशजनुषो भूसारनिवासराघवार्यस्य ।
उत्तररामचरित्रव्याख्यायामवसितः पञ्चमोऽङ्कः ॥

**इति श्रीवाधूलवीरराघवविरचितायां भवभूतिभावतलस्पर्शिन्यां समाख्यायां उत्तररामचरितव्याख्यायां**

( ततः प्रविशति विमानमारूढं विद्याधरमिथुनम् । )

**विद्याधरः**—अहो नु खल्वनयोर्विकर्तनकुलकुमारयोरकाण्डकलहप्रचण्डयोरुद्योतितक्षत्रलक्ष्मीकयोरत्यद्भुतोत्क्रान्तदेवासुराणि विक्रान्तचरिता[३]नि । तथाहि प्रिये पश्य पश्य ।

> **झणज्झ[४]णितकङ्कणक्वणितकिङ्किणीकं धनु-**
> **र्ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम् ।**
> **वितत्य किरतोः शरानविरतस्फुरच्चूडयो-**
> **र्वि[५]चित्रमभिवर्तते भुवनभीममायोधनम् ॥ १ ॥**
> **वि[६]जृम्भितं च दिव्यस्य मङ्गलाय द्वयोरपि ।**
> **स्तनयित्नोरिवाम[७]न्द्रं दुन्दुभेर्दुन्दुमायितम् ॥ २ ॥**

तत्प्रवर्ततामनयोः प्रवीरयोरनवरतमविरलललितविकचकनककमलकमनीयसंहति[८]रमरतरुतरुणमणिमुकुलनिकरमकरन्दसुन्दरः पुष्पनिपातः ।

**विद्याधरी**—ता किं ति उण अआण्डविप्फुरिदतडिच्छडाकडारं विअ अम्बरं झत्ति संवुत्तम् ।

---

(क) तत्किमिति पुनरकाण्डविस्फुरिततडिच्छटाकडारमिवाम्बरं झटिति संवृत्तम् ।

---

युद्धस्य युद्धेऽवस्थानं वधमिति दृश्यत्वप्रतिषेधाद्विष्कम्भेन तदाह—विद्याधरमिथुनमित्यादिना ॥ विकर्तनः सूर्यः । अकाण्डकलहेन उभयोरप्येकत्वेन वा मनोवद्धतुरहितवैरेण प्रचण्डयोः क्रूरयोरुद्योतिता क्षत्रलक्ष्मीः ययोस्तथोक्तयोः । अत्यद्भुतेनातिविस्मयेन उत्क्रान्ता देवासुराः यैस्तथोक्तानि विक्रान्तस्य विक्रमस्य विलसितानि । अहो विस्मयनीयानीत्यर्थः । रणदिति । रणत्कारेण रणदिति शब्दहेतुज्यास्फालनेन झणझणाकारवत्क्वणितयुक्तम् । ध्वनन् गुरुगुणः ज्या यस्य तथोक्तया अटन्या धनुष्कोट्या कृतः करालः भीषणः कोलाहलो यस्य तथोक्तं धनुर्वितत्य मण्डलीकृत्य विस्तार्य शरानविरतं किरतोर्लवचन्द्रकेत्वोः ॥ १ ॥ स्तनयित्नोरिव गर्जन्मेघस्येव अमन्ददुन्दुभेर्दुन्दुमायितं दुन्दुमशब्दः जृम्भितं प्रवृत्तम् ॥ २ ॥ अनयोर्लवचन्द्रकेत्वोस्तादर्थ्येन अविरलमिलिता कमलकमनीयसंहतिर्येन तथोक्तः पुष्पनिपातः पुष्पवृष्टिः । तडिच्छटया विद्युज्जालेन कडारं कपिलं आकाशमन्यदिव जातमि-

---

१ अकाण्डकलहेन. २ क्षात्र. ३ विलसितानि, विचरणानि. ४ रणत्कारणझण्झण०. ५ अविरतं पतत् शरयोः. ६ जृम्भितं च विचित्राय. ७ अमन्ददु०. ८ मिलित, ललित.

त्वाष्ट्रयन्त्रभ्रमिभ्रान्तमार्तण्डज्योतिरुज्ज्वलम् ।
पुटभेदो ललाटस्थनीललोहितचक्षुषः ॥ ३ ॥

आं ज्ञातम् । जातक्षोभेण चेन्द्रकेतुना प्रयुक्तमस्त्रमाग्नेयम् । यस्यायमग्निच्छटासंपातः । संप्रति हि ।

अवदग्धकर्बुरितकेतुचामरै-
रपयातमेव हि विमानमण्डलैः ।
दधति ध्वजांशुकपटाञ्चलेष्विमाः
क्षणकुङ्कुमच्छुरणविभ्रमं शिखाः ॥ ४ ॥

आश्चर्यम् । प्रवृत्त एवायमुच्चण्डवज्रखण्डावस्फोटपटुरवस्फुलिङ्गगुरुरु-

---

त्यर्थः ॥ तत्किं नु खलु नु किमिति पदद्वयमस्य च वक्ष्यमाणवाक्यद्वयेनान्वयः । त्वाष्ट्रेति । त्वष्टृशाणचक्रभ्रमिभ्रान्तमार्तण्डज्योतिः किम् । उज्ज्वलः ललाटस्थनीललोहितचक्षुषः रुद्रललाटनेत्रस्य पुटभेदो नु उन्मीलनं नु । अथवा किं नित्यैकमेव पदम् । मार्तण्डज्योतिरुज्ज्वल इत्येकपदं पुटभेदविशेषणम् । ज्योतिरिवोज्ज्वलतीति तदर्थः ॥ ३ ॥ जातक्षोभेण प्रकृतिविपर्यासवता । आग्नेयमग्निदैवत्यम् । शरसंपातः इषुधारा । अवदग्धेति । अवदग्धानि प्रायेण दग्धानि बर्बरितानि यानि दाहजबर्बरध्वनियुक्तानि । केतवः क्षुद्रध्वजाश्चामराणि वालव्यजनानि येषां तथोक्तैः । अपयातम् । भावे क्तः । नवपलाशकुसुमकान्तिसदृशः शिखी अग्निः । ध्वजा महाकेतवः तेषामंशुकानि चीनांशुकानि तान्येव पटाः । सामान्यविशेषशब्दयोः कर्मधारयः । 'उत्तरीये वस्त्रमात्रे सूक्ष्मवस्त्रेऽपि चांशुकम्' इति रत्नमाला । अंशुकपदं सूक्ष्ममात्रपरं गोबलीवर्दन्यायेन । तेषामावलिं ध्वजलक्षणकान्तिव्याजमुञ्चानीति वार्थः । अत्र ध्वजाश्च अंशुकपटाश्चेति विग्रहः । व्याजपर्यायः कपटशब्दः । अंशत्र एव ध्वजव्याजेन वर्तन्त इति लाभात्तेजिष्ठत्वं ध्वजानां लभ्यते । किं चायमाग्नेयाग्निरग्निमपि दहतीति असंबन्धेऽपि संबन्धादतिशयोक्तिरिति अपह्नवेन सह संकरः ॥ ४ ॥ वज्रखण्डस्याशनिशकलस्य अवस्फोटः स्फुटनं तद्वत्पटु तीक्ष्णं यथा तथा रटन् स्फुलिङ्गगुरुः कणबहुलः । उत्तालतुमुलं यथा तथा अतिशयितसंकुलं यथा तथा लेलिहानः भृशं कवलनपरः । लिहधातोर्यङ्लुकि चानश् । उज्ज्वलज्वालासंभारेण ज्वालातिशयेन भैरवः भयंकरः । उपर्युक्तः अग्निः । अस्याग्नेः संपातः समन्वयतनम् ।

[illegible]
श्चास्य सर्वतः संतापः। तत्प्रियामंगेनाच्छाद्य सुदूरमपसरामि।

( तथा करोति। )

**विद्याधरी**— दिट्ठिआ एदेण विमलमुत्ताफलसीअलसिणिद्धमसिणमंसलेण णाहदेहफंसेण आणन्दमंदमउलिदघुण्णन्तलोअणाए अप्पोदिदो एव्व अन्तरिदो मे संदावो। (क)

**विद्याधरः**—अयि किमत्र मया कृतम्। अथवा।

> **न किंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।**
> **तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ५ ॥**

**विद्याधरी**—कहं अविरलविलोलघुण्णमाणविज्जुल्लदाविलासमंडिदेहिं मत्तमहूरकण्ठसामलेहिं ओत्थरीअदि णहत्थलं जलहरेहिं।

**विद्याधरः**—हन्त कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खल्वेषः। कथमविरलप्रवृत्तवारिधारासहस्रसंपातैः प्रशान्तमेव पावकास्त्रम्।

**विद्याधरी**—पिअं मे पिअं मे। (ग)

**विद्याधरः**—हन्त हन्त भोः सर्वमतिमात्रं दोषाय। यत्प्रलय-

---

(क) दिष्ट्या एतेन विमलमुक्ताफलशीतलस्निग्धमसृणमांसलेन नाथदेहस्पर्शेनानन्दमुकुलितघूर्णमानलोचनाया अल्पोदित एवान्तरितो मे संतापः।

(ख) कथमविरलविलोलघूर्णमानविद्युल्लताविलासमण्डितैर्मत्तमयूरकण्ठश्यामलैरवस्तीर्यते नभःस्तलं जलधरैः।

(ग) प्रियं मे प्रियं मे।

---

प्रचण्डः अतितीक्ष्णः। विमलमुक्ताशैलवत् निर्दोषमौक्तिकपर्वतवत् शीतलेन स्निग्धेन स्नेहयुक्तेन मसृणेन चाकचक्यवता मांसलेन स्फीतेन। सर्वत्र विशेषणसमासः। आनन्देन संदलिता वर्तिता वेदना यस्मिंस्तथोक्तः। अन्तरितस्तिरोहितः। मया किमत्र कृतम्। न किमपीत्यर्थः। **न किंचिदपीत्यादि**। पूर्वं व्याख्यातम् ॥ ५ ॥ विलोलाः वेपमानाः घूर्णमानाः वेष्टमानाः। अवस्तीर्यते आच्छाद्यते। 'अवतीर्यते' इति च पाठः ॥ आग्नेयास्त्रप्रतिद्वन्द्वित्वाद्वारुणास्त्रं प्रयुक्तम्। धारासंपातैर्धारासम्यक्पतनैः प्रशान्तं निर्वापितम् ॥ अतिमात्रं प्रमा-

कवारीविश्वग्रसनविकटविकरालकालमुखकन्दरेविवर्तमानमिव युगान्तयोगनिद्रानिरुद्धसर्वद्वारनारायणोदरनिविष्टमिव भूतजातं वेपते ।
साधु चन्द्रकेतो साधु । स्थाने वायव्यमस्त्रमीरितम् । यतः ।

विद्याकल्पेन मरुता मेघानां भूयसामपि ।
ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः ॥ ६ ॥

**विद्याधरी**—णाध को दाणिं एसो ससंभमुक्खित्तकरब्भमिदोत्तरिअञ्चलो दूरदो एव्व महुरसिणिद्धवअणपडिसिद्धजुद्धव्वावारो एदाणं कुमाराणं अन्दरे विमाणवरं ओदरावेदि । ( क )

( क ) नाथ क इदानीमेव ससंभ्रमोत्क्षिप्तकरभ्रमितोत्तरीयाञ्चलो दूरत एव मधुरस्निग्धवचनप्रतिषिद्धयुद्धव्यापार एतयोः कुमारयोरन्तरे विमानवरमवतारयति ।

उत्क्षोभा अतिशयितक्षोभयुक्ता गम्भीरा अनल्पा गुलुगुलायमाना गुलुगुलु इत्याकारकवर्णध्वनियुक्ता ये मेघास्तैर्मेदुरितेन सान्द्रितेन अन्धकारेण नीरन्ध्रमविरलं नद्धमिव बद्धमिव एकेन वारेण क्षणेन विश्वस्य प्रपञ्चस्य ग्रसनेन कवलनेन । एकवार इहानावृत्तिर्वा । विकटं निम्नोन्नतं विकरालं विशेषेण भीषणं कालमुखं मृत्युवक्त्रं तस्मिन्निवर्तमानमिव विकुर्वाणमिव । युगान्ते कल्पान्ते योगनिद्रया ध्यानात्मकस्वापेन निरुद्धानि सर्वाणि द्वाराणि यस्य तथोक्तम् । यन्नारायणोदरं समस्तवस्त्वाधारभूतलक्ष्मीनायकोदरम् । तस्मिन्निविष्टमिव भूतम् । जात्येकवचनम् । प्राणिन इत्यर्थः । विपद्यते विपदं प्राप्नोति । वायव्यं वायुदैवत्यम् । 'वाय्वृतु–' इति यत्प्रत्ययः । ईरितं प्रेरितमिति यत्तत्स्थाने युक्तम् । यतः यस्मात् । **विद्येति** । विद्याकल्पेन तत्त्वमस्यादिवाक्यप्रविहिततत्त्वज्ञानसदृशेन मरुता वायुना कर्त्रा भूयसां बहुतराणां मेघानां ब्रह्मणि निर्विशेषसन्मात्रे कूटस्थे चैतन्ये विवर्तानामिव अधिष्ठानविषयसत्ताव्यावहारिकघटपटादिविकल्पानामिव प्रविलयः निवृत्तिः कृतः । इदं चाद्वैतप्रक्रियया व्याख्यातम् । परमार्थतस्तु विद्याकल्पेन दर्शनसमानाकाराविच्छिन्नस्मृतिसंतानात्मकसद्विद्यादिसदृशेन मरुता ब्रह्मणि निखिलचेतनाचेतनशरीरके समस्तकल्याणगुणाकारे श्रीमति नारायणे विवर्तानामिव विशेषणीभूतचिदचिद्वारकविलक्षणविकारभूतदेहेन्द्रियादीनामिव प्रविलयः कृतः । जगदुपादानस्य ब्रह्मणः कार्यत्वनियतनामरूपप्रहाणलक्षणात्यन्तिकलय एव तदपृथक्सिद्धविशेषणभूतजीवस्य मोक्षः । स च 'तमेवं विदित्वा–' इत्यादि श्रुतिभिर्भक्तिसाध्य एव मुक्तिः इति । ब्रह्मैव सन् ब्रह्माप्येति इत्युक्तेः ॥ ६ ॥ प्रतिषिद्धः निवर्तितः युद्धव्यापारो येन

विद्याधरः—(दृष्ट्वा) दिष्ट्या एष शंबूकवधात्प्रतिनिवृत्तो रघुपतिः ।

शान्तं महापुरुषसंगदितं निशम्य
तद्गौरवात्समुपसंहृतसंप्रहारः ।
शान्तो लवः प्रणत एव च चन्द्रकेतुः
कल्याणमस्तु सुतसंगमनेन राज्ञः ॥ ७ ॥

तदितस्तावदेहि । (इति निष्क्रान्तौ ।)

मिश्रविष्कम्भः ।

(ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च ।)

रामः—(पुष्पकादवतरन् ।)

दिनकरकुलचन्द्र चन्द्रकेतो
सरभसमेहि दृढं परिष्वजस्व ।
तुहिनशकलशीतलैस्तवाङ्गैः
शममुपयातु ममापि चित्तदाहः ॥ ८ ॥

(उत्थाप्य सस्नेहास्रं परिष्वज्य ।) अपि नाम कुशलं तव दिव्यास्त्रधरदेहस्य ।

---

तथोक्तः । अन्तरे मध्ये । प्रतिषेधवाक्येन तयोस्तत्प्रतिघाताय मध्ये रथस्थापने तन्निवर्तयतीति भावः ॥ शम्बूकवधात् शम्बूकवधं निर्वर्त्य । ल्यब्लोपे पञ्चमी । **शान्तमिति** । शान्तं कार्कश्यरहितं महापुरुषस्य रामस्य संगदितं वचनं निशम्य तद्गौरवाद्रामविषयकगौरवत्वबुद्ध्या समुपसंहृतः निवृत्तः संप्रहारः युद्धं येन तथोक्तः । लवः शान्तः निवृत्तव्यापारोऽभूत् । चन्द्रकेतुश्च प्रणत एव । यत एवं ततः सुताभ्यां लवचन्द्रकेतुभ्यां संगमनेन समागमेन राज्ञः रामस्य कल्याणमस्तु । विद्याधरेण ज्ञानत्वात्सुतेत्युक्तिः ॥७॥ **दिनकरेति** । दिनकरकुलचन्द्र सूर्येण सह तदीयस्यास्मद्वंशस्य आह्लादकप्रसिद्धचन्द्र । सूर्यं प्रति चन्द्रत्वाभावेनास्य तं प्रत्यपि चन्द्रत्वमाधिक्ये पर्यवस्यति । अत एव ममापि चित्तदाह इत्युक्तिः संगच्छते । ममापि एवमत्यन्ततप्तस्यापि मम । अनेन सहस्रभानुतापापेक्षयापि स्वतापस्य भूयस्त्वं गम्यते । शमं निर्वाणमुपयातु प्राप्नोतु । ८ । तव दिव्यास्त्रयोधनस्य

**चन्द्रकेतुः**—कुशलमत्यद्भुताकारस्य प्रियदर्शनस्य लवस्य लाभाभ्युदयेन। तद्विज्ञापयामि मामिव विशेषेण वा मत्तः स्निग्धेन चक्षुषा पश्यत्वमुं महावीरप्रकाण्डं तातः।

**रामः**—( लवं निरूप्य। ) दिष्ट्या अतिगम्भीरमधुरकल्याणाकृतिरयं वयस्यो वत्सस्य।

**त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः**
**क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोषस्य गुप्त्यै।**
**सामर्थ्यानामिव समुदयः संचयो वा गुणाना-**
**माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ ९ ॥**

**लवः**—( स्वगतम्। ) अहो पुण्यानुभावदर्शनोऽयं महापुरुषः।

**आश्वासस्नेहभक्तीनामेकमालम्बनं महत्।**
**प्रकृष्टस्येव धर्मस्य प्रसादो मूर्तिसंचरः ॥ १० ॥**

---

तवेति शेषः। अनामयमारोग्यम् ॥ अत्यद्भुतस्य आश्चर्यकरस्य प्रियवयस्यस्य लाभ एवाभ्युदयस्तेन। स्निग्धेन स्नेहवता चक्षुषा अनरालसाहसमकुटिलयुद्धादिव्यापारम्। अमुं लवम्। अतिगम्भीरा अक्षोभ्या कल्याणी मङ्गलावहा आकृतिराकारो यस्य तथोक्तः। दिष्ट्या आनन्दहेतुः। **त्रातुमित्यादि**। लोकान् चतुर्दशभुवनानि त्रातुं रक्षितुं कायवान्मूर्तिमान् सन् परिणतः जातः अस्त्रवेदः अस्त्रमन्त्रभागस्तद्रूपस्थितः। ब्रह्मकोशस्य ब्रह्माण्डस्य गुप्त्यै रक्षणाय तनुं मूर्तिं श्रितः प्राप्तः क्षात्रो धर्म इव स्थितः शौर्यवीर्यादिरूपक्षत्रियस्वभाव इव स्थितः। सामर्थ्यानामारब्धकार्यनिर्वहणशक्तीनां समुदय इव स्थितः। गुणानां धैर्यादीनां संचयो वा समूह इव स्थितः। 'वा स्याद्विकल्पोपमयोः' इति कोशः। जगत्पुण्यनिर्माणानां जगत्पुण्यानुष्ठानानां राशिरिव स्थितोऽयं वत्सस्य वयस्य इति पूर्वेण संबन्धः। आविर्भूय प्रत्यक्षीभूय स्थितः जगत्पुण्यनिर्माणराशिरिवस्थितः। अभूतोपमा ॥ ९ ॥ पुण्ये अनुभावदर्शने यस्य तथोक्तः। अनुभावः प्रभावः दर्शनं साक्षात्कारः। **आश्वास इति**। भक्तीनां स्नेहपूर्वानुध्यानानामाश्वास इव स्थितः दुःखविस्मरणपूर्वकाह्लाद इव स्थितः। भक्तयोऽन्यत्र हि क्रियमाणा विषयदोषेण दुःखयन्ति तासां रामे क्रियमाणानां विषयसौष्ठवेनाह्लादो जायते। तद्धेतौ तत्वारोपः। एकमद्वितीयं महद्विपुलं भक्तीनामायतनं

आश्चर्यम् ।

> विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन-
> स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।
> झटित्यस्मिन्दृष्टे किमपि परवानस्मि यदि वा
> महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥११॥

रामः---तत्किमयमेकपद एव मे[2] दुःखविश्रामं ददात्युपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानम् । अथवा स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत्[3] ।

> व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
> र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
> विकसति हि पतङ्गस्योदये पुण्डरीकं
> द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ १२ ॥

---

आश्वासः द्वेषाभावः । स्नेहः प्रणयः भक्तिः स एव भावनाप्रकर्षेण प्रत्यक्षसमानाकारतामापन्न एव तासां मुख्यविषयभूत इत्यर्थः । प्रकृष्टस्य लोकोत्तरस्य धर्मस्य सुकृतस्य मूर्तिसुन्दरः प्रसाद इव स्थितः महापुरुष इति पूर्वेणान्वयः । उक्तं च 'रामो विग्रहवान्धर्मः' इति । प्रसाद इह फलप्रदानोन्मुखता ॥ १० ॥ **विरोध इति** । विरोधः वैरम् । विश्रान्तः विरतः । निर्वृतिघन आनन्दसान्द्रः । रस्यते चर्व्यते इति रसः । अपरोक्षावभासरूपः । प्रसरति प्राप्नोति । तद्विपुलमौद्धत्यं दर्पहेतुकसंभावनारूपं क्वापि व्रजति । विनयः महाजनसंनिधौ स्वोत्कर्षाननुसंधानरूपः मां प्रह्वयति नमयति । अस्मिन्महापुरुषे दृष्टे सति साक्षात्कृते सति किमिति परवानस्मि कस्माद्धेतोः परतन्त्रोऽस्मि । यदि वा अथवा तीर्थानामिव गङ्गादिपावनसलिलानामिव महतां पुरुषाणां महार्घः अमूल्यः । श्लाघ्य इति यावत् । । अतिशय उत्कर्षः कोऽपि । अन्यादृश इत्यर्थः । इमं च श्लोकं बहवो बहुमन्यन्ते ॥ ११ ॥ एकपद एव एकक्षण एव दुःखविश्रामं दुःखनिर्वृतिं ददाति । कुतोऽपि निमित्तादनिर्धारिताद्धेतोरन्तरात्मानमुपस्नेहयति स्नेहयुक्तं करोति । अथवा पूर्वोक्तपक्षाभावे । निमित्तसव्यपेक्षः हेतुसापेक्षः स्नेहश्च निमित्तसव्यपेक्षश्चेति यत् स्नेहत्वनिमित्तसापेक्षत्वरूपं विप्रतिषिद्धं व्याहतम् । **व्यतिषजतीति** । कोऽपि हेतुः भवितव्यतारूपः तस्यान्तरत्वमलौकिकत्वं पदार्थानन्तःकरणप्रभृतिवस्तुजातं व्यतिषजति अन्योन्यलग्नान्करोति । अन्त-

लवः—चन्द्रकेतो क एते ।

चन्द्रकेतुः—प्रियवयस्य ननु तातपादाः ।

लवः—ममापि तर्हि धर्मतस्तथैव यतः प्रियवयस्य इति भवतोक्तम् । किंतु चत्वारः खलु भवतामेवंव्यपदेशभागिनस्तत्रभवन्तो रामायणकथापुरुषाः । तद्विशेषं ब्रूहि ।

चन्द्रकेतुः—ननु ज्येष्ठतातपादा इत्यवेहि ।

लवः—( सोल्लासम् । ) कथं रघुनाथ एव । दिष्ट्या सुप्रभातमद्य यदयं देवो दृष्टः । ( सविनयकौतुकं निर्वर्ण्य । ) तात प्राचेतसान्तेवासी लवोऽभिवादयते ।

रामः—आयुष्मन् एह्येहि ( इति सस्नेहमालिङ्ग्य । ) अयि वत्स कृतं कृतमतिविनयेन । अनेकवारमपरिश्लथं परिष्वजस्व माम् ।

परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः ।
नन्दयति चन्द्रचन्दननिष्यन्दजडस्तव स्पर्शः ॥ १३ ॥

लवः—( स्वगतम् । ) ईदृशो मां प्रत्यमीषामकारणस्नेहः । मया

---

नापेक्षन्त इति प्रसिद्धम् । दृष्टान्तमाह—विकसतीत्यादि । पतङ्गस्य सूर्यस्य । चन्द्रकान्तः शिलाविशेषः । अत्र मार्दवस्याप्रयोजकत्वसूचनाय द्वितीयदृष्टान्तः ॥ १२ ॥ धर्मतः पुण्यात् । मित्रस्य पिता स्वस्य पितेति शास्त्रस्यायमर्थः स्वपितृविषये यादृशमनुवर्तनं तादृशं मित्रपितृविषयकं महते श्रेयसे कल्पत इति । एवं च मद्धर्महेतुकपितृत्ववानित्यर्थः । एवं व्यपदेशस्य तातपादशब्दस्य भागिनः स्वामिनः । भागो हि स्वं भागी स्वामी तातपादशब्दस्य वाच्यतया स्वामिनः अर्थप्रत्ययनार्थत्वाच्छब्दस्य वाच्यशेषत्वं वाचकस्य । तत्रभवन्तः पूजनीयाः रामायणकथापुरुषाः रामायणनामकवाक्यप्रबन्धप्रधाननायकाः । तद्विशेषं तेषु विशेषं तातपादत्वव्याप्यरामत्वाद्यन्यतमधर्मविशिष्टत्वं ब्रूहि बोधय ॥ प्राचेतसान्तेवासी वाल्मीकिशिष्यः ॥ परीति । परिणतस्य विकसितस्य कठोरस्य समग्रस्य पुष्करस्य पद्मस्य गर्भच्छदवदातपाद्यनभिहतान्तरपत्रवत् पीनः मांसलः मसृणः दन्तुरतारहितः सुकुमारः मृदुलः चन्दननिष्यन्दवत् चन्दनद्रव-

पुनरभ्य एवाभिद्रुग्धमज्ञेन यदायुधपरिग्रहे यावदध्यारूढा दुर्योगः ।
( प्रकाशम् । ) मृष्यत्विदानीं लवस्य बालिशतां तातपादाः ।

**रामः**—किमपराद्धं वत्सेन ।

**चन्द्रकेतुः**—अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन ।

**रामः**—नन्वयमलंकारः क्षत्रस्य ।

न तेजस्तेजस्वी प्रसृतमपरेषां विषहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥१४॥

**चन्द्रकेतुः**—अमर्षोऽप्यस्यैव शोभते महावीरस्य । पश्यन्तु हि तातपादाः प्रियवयस्यनियुक्तजृम्भकास्त्रनिष्कम्पस्तम्भितानि सर्वतः सैन्यानि ।

**रामः**—वत्स लव संह्रियतामस्त्रम् । त्वमपि चन्द्रकेतो निर्व्यापारविलक्षितानि सान्त्वय बलानि ।

---

षये अपकर्तुम् । 'क्रिया-' इति चतुर्थी । आयुधपरिग्रहः कृतः । बालिशतां मूर्खतां मृष्यन्तां सहन्ताम् ॥ किमपराद्धं कोऽनिष्टाचारः ॥ अश्वस्य मेध्याश्वस्य अनुयात्रिकाः अनुयात्रायां नियुक्तास्तेभ्य इति पञ्चमी । आविष्करणं प्रकाशनमुपश्रुत्याकर्ण्य वीरायितं वीरवदाचरितम् ॥ अयं वीरायितं विधेयप्राधान्यात्पुंस्त्वम् । अलंकारः शोभाकरः । **न तेज इति** । प्रसृतमपरेषां तेजः पराभिभवनसामर्थ्यं न विषहते न सहत इति यत् सः प्रकृतिनियतत्वादुपादानकारणव्यापृतत्वादकृतकः अनागन्तुकः । स्वो भावः धर्मः । सत्कार्यवादे कारणगुणाः कार्ये उपलभ्यन्ते । मयूखैः किरणैरश्रान्तमविरतमाग्नेयो ग्रावा अग्न्युत्पादकसूर्यकान्तशिला निकृत इव परिभूत इव तेजांसि वमति उद्गिरति । दृष्टान्तालंकारः ॥ १४ ॥ अमर्षोऽपि न केवलं तेजः किंतु मन्युरपि शोभते हृद्यो भवति । स्तम्भितानि निर्व्यापाराणि । संह्रियतामाकृष्यताम् । जृम्भकास्त्रप्र-

लवः—यथाज्ञापयति तातः । ( इति प्रणिधानं नाटयति । )

चन्द्रकेतुः—यथादिष्टम् । ( इति निष्क्रान्तः । ) )

लवः—तात प्रशान्तमस्त्रम् ।

रामः—वत्स सरहस्यप्रयोगसंहाराण्यस्त्राण्याम्नायवन्ति ।

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्रं शरदस्तपांसि ।
एतान्यपश्यन्गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

अथैतामस्त्रमन्त्रोपनिषदं भगवान्कृशाश्वः परःसहस्रसंवत्सरान्तेवासिने कौशिकाय प्रोवाच । स तु भगवानमह्यमित्येष गुरुपूर्वानुक्रमः । कुमारस्य कुतः संप्रदाय इति पृच्छामि ।

लवः—स्वतःप्रकाशान्यावयोरस्त्राणि ।

रामः—( विचिन्त्य । ) किं न संभाव्यते । प्रकृष्टपुण्यपरिपाकोपादानः कोऽपि महिमा स्यात् । द्विवचनं तु कथम् ।

लवः—भ्रातरावावां यमौ ।

रामः—स तर्हि द्वितीयः कः ।

( नेपथ्ये । )

---

युक्तपीडाया अननुभूतत्वात् । निर्व्यापारतया विलक्षणानि विस्मयान्वितानि । सान्त्वय मधुरोक्तिभिर्मोदय । प्रणिधानं ध्यानम् । प्रयोगो नियोजनम् । संहार आकर्षणम् । सरहस्यौ अङ्गन्यासाद्यनुष्ठानसहितौ प्रयोगसंहारौ येषां तथोक्तानि । संपद्यन्ते स्थितानि भवन्ति । ब्रह्मादय इति । व्याख्यातम् ॥ अस्त्रमन्त्रोपनिषदं अस्त्रमन्त्रमयीमुपनिषदम् । परःसहस्राधिकसंवत्सरं परिचर्यानिरताय कौशिकाय विश्वामित्राय । भगवान् कौशिकः । पूर्वेषां गुरूणामनुक्रमः परम्परासंप्रदायः गुरुमुखोपदेशः । कुतः कस्मात् । स्वतःप्रकाशानि गुरुपदेशेन विना ज्ञातानि ॥ किं न संभाव्यते । सर्वं संभावितमेवेति भावः । प्रकृष्टपुण्योपादानकः प्रभूतसुकृतादिकरणकः । द्विवचनं तु आवयोरिति षष्ठी-

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-

रायोधनं ननु किमात्थ सखे तथेति ।

अद्यास्तमेतु भुवनेष्वधिराजशब्दः

क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥ १६ ॥

रामः—

अथ कोऽयमिन्द्रमणिमेचकच्छवि-

र्ध्वनिनैव बद्धपुलकं करोति माम् ।

नवनीलनीरधरधीरगर्जित-

क्षणबद्धकुड्मलकदम्बडम्बरम् ॥ १७ ॥

लवः—अयमसौ मम ज्यायानार्यः कुशो नाम भरताश्रमात्प्रतिनिवृत्तः ।

रामः—( सकौतुकम् । ) [2]वत्स इत एवाह्वयैतमायुष्मन्तम् ।

लवः—[3]एवम् । ( इति परिक्रामति । )

( ततः प्रविशति कुशः । )

कुशः—( [4]साकूतहर्षधैर्यं धनुरास्फालयन् । )

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादा मनो-

र्दृप्तानां दमनाय दीपितनिजक्षत्रप्रतापाग्निभिः ।

आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो

दीप्तास्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः ॥ १८ ॥

---

द्विवचनं तु । आयुष्मत इति । आयुष्मतः अनुजतया तथोक्तिः । नरेन्द्रसैन्यैः राजसैनिकैरायोधनं ननु युद्धं किम् । तथेत्यात्थ किम् । भुवनेषु राजशब्दः अस्तं नाशमेतु प्राप्नोतु । क्षत्रस्य क्षत्रियजातेः शस्त्राण्येव शिखिनः वह्नयः शमं निर्वाणं यान्तु प्राप्नुवन्तु ॥ १६ ॥ अथेति । इन्द्रमणिमेचकच्छविः इन्द्रनीलवन्नीलच्छविः । अथेति प्रश्ने । कदम्बस्येव डम्बरं विभ्रमो यस्येति विग्रहः ॥ १७ ॥ ज्यायानग्रजः ॥ इत एव अत्रैव । एतं कुशम् ॥ सक्रोधं कृतधैर्यं च यथा तथा । दत्तेति । अभयमेव दक्षिणा अभयदक्षिणा । इन्द्रस्य अभयदक्षिणा दत्ता यैरिति बहुव्रीहिः । भगवतः षाड्गुण्यवतः वैवस्वताद्विवस्वत्पुत्रादा मनोः मनुमारभ्य दृप्तानां दमनाय शिक्षणाय दीपितः ज्वलितः निजः

---

१ न. २ तर्हि वत्स. ३ यदाज्ञापयति तात इति निष्क्रान्तः । ४ स क्रुद्धः सक्रोधं

रामः—कोऽप्यस्मिन्क्षत्रियपोतके पौरुषातिरेकः ।

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥ १९ ॥

लवः—( उपसृत्य । ) जयत्वार्यः ।

कुशः—नन्वायुष्मन् किमियं वार्ता युद्धं युद्धमिति ।

लवः—यत्किंचिदेतत् । आर्यस्तु दृप्तं भावमुत्सृज्य विनयेन वर्तताम् ।

कुशः—किमर्थम् ।

लवः—यदत्र देवो रघुपतिस्तिष्ठति । स च स्निह्यत्यावयोरुत्कण्ठते च युष्मत्संनिकर्षस्य ।

---

असाधारणः क्षत्रप्रताप एवाग्निर्यैस्तथोक्तैः । 'दहनाय' इत्यपि च पाठः । आदित्यैः सूर्यवंश्यैः । 'दित्यदित्य'–इति ण्यः । नृपतिभिः विग्रहो यदि विरोधश्चेत्ततः तदा दीप्तानामस्त्राणां स्फुरन्त्यस्तरलाः उग्रास्तीक्ष्णाः या दीधितयस्तासां शिखया कोट्या नीराजिता आर्तीकृता ज्या मौर्वी यस्य तथोक्तम् । ममैतद्धनुः । धन्यं प्रशस्तम् ॥ १८ ॥ विकटं विषमं परिक्रामति ॥ दृष्टिः इति । तृणीकृतः अनादृतः जगत्त्रयसत्त्वसारः लोकत्रयबलोत्कर्षो यया सा । धीरोद्धता धीरा चासौ उद्धता चेति विग्रहः । कौमारकेऽपि बाल्येऽपि गिरिवत्पर्वत इव । गिरिर्हि उत्पत्तिप्रभृतिगुरुत्ववान् वृक्षादयस्तु नैवम् । किंतु परिणामविशेषेण गुरुत्वं भजन्ति । किं वीरो रस एति शत्रुकृतापराधादिना प्रज्वलनरूपक्रोधस्थायिकस्वसंवेद्यः प्रकाशविशेषः किमेति । रसालम्बने रसत्वारोपाद्धेत्वलंकारः । दर्पः युद्धकण्डूलता ॥ १९ ॥ आयुष्मन् लवं प्रति संबोधनम् । युद्धं युद्धमिति वार्ता प्रवृत्तिः युद्धमासीदिति जनवादः श्रूयते स किं सत्य इत्यर्थः ॥ एतद्युद्धं यत्किंचिदल्पकम् । न प्रश्नार्हमित्यर्थः । आर्यस्तु । ज्येष्ठभ्रातृप्रयुक्तपूजाद्योतनाय आर्यशब्दप्रयोगः । दृप्तं भावं दर्पात्मकस्वभावमुत्सृज्य त्यक्त्वा । दृप्तमित्यत्र भावे क्तः । विनयेन निकर्षप्रतिसंधानेन । उपलक्षणे तृतीया ॥ देवः पूज्यः

---

[illegible]

कुशः—( सतर्कम् । ) स रामायणकथानायको ब्रह्मकोषस्य गोपायिता ।

लवः—अथ किम् ।

कुशः—आशंसनीयपुण्यदर्शनः स महात्मा । किंतु कथमस्माभिरुपगन्तव्य इति न संप्रधारयामि ।

लवः—यथैव गुरुस्तथोपसदनेन ।

कुशः—कथं हि नामैतत् ।

लवः—अत्युदात्तः सुजनश्चन्द्रकेतुरौर्मिलेयः प्रियवयस्येति सख्येन मामुपतिष्ठते । तेन सत्संबन्धेन धर्मतात एवायं राजर्षिः ।

कुशः—संप्रत्यवर्चनीयो राजन्येऽपि प्रश्रयः ।

( उभौ परिक्रामतः । )

लवः—पश्यत्वेनमार्यो महापुरुषमाकारानुभावगाम्भीर्यसंभाव्यमानविविधलोकोत्तरसुचरितातिशयम् ।

कुशः—( निर्वर्ण्य । )

---

रघुनन्दनः रामः अत्र स्थित इति यत्तस्माद्विनयेन वर्ततामिति पूर्वेणान्वयः ॥ ब्रह्मकोशस्य ब्रह्माण्डस्य गोप्ता रक्षकः ॥ स महात्मा अनन्यसामान्यस्वभावः रामः आशंसनीयमभिलक्षणीयं पुण्यं सुकृतमूलं दर्शनं साक्षात्कारः यस्य तथोक्तः । भवतीति शेषः । 'अस्तिर्भवतिपरः' इत्युक्तेः । अप्राप्तस्य प्रयोजनस्य प्राप्तुमिच्छा आशंसा । किंतु एवं सत्यपि अस्माभिर्मया कथमुपगन्तव्य इति संप्रधारयामि केन प्रकारेण उपस्थातव्यमिति मीमांसे ॥ **यथैवेति** । यथा गुरुः पिता उपसदनेन समीपानुभजनेन । प्राप्य इति पूरणीयम् । तथैव उपसदनेनात्रापि प्राप्य इत्यध्याहारः ॥ एतद्गुरुवदुपसदनीयत्वं कथं कस्माद्धेतोः ॥ अत्युदात्तः अत्युच्चस्वभावः सुजनः समीचीनजनः । सौजन्यवानिति यावत् । और्मिलेयः ऊर्मिलापुत्रः । स्त्रीभ्यो ढक् । सख्येन सखित्वेन मामुपतिष्ठते संश्लिष्यते । 'उपाद्देव–' इति आत्मनेपदम् । तेन सबन्धेन चन्द्रकेत्वभ्युपगतमैत्रीरूपसंबन्धेन ॥ संप्रति धर्मतस्तातत्वे राजन्ये रामेऽपि प्रश्रयो विनयः अवचनीयो निर्दुष्टः ॥ आकारः महापुरुषलक्षणयुक्तविग्रहसन्निवेशः अनुभावः

अहो प्रासादिकं रूपमनुभावश्च पावनः ।
स्थाने रामायणकविर्देवीं वाचमवीवृधत् ॥ २० ॥

( उपसृत्य ) तात प्राचेतसान्तेवासी कुशोऽभिवादयते ।

**रामः**—एह्येह्यायुष्मन् ।

अमृताध्मातजीमूतस्निग्धसंहननस्य ते ।
परिष्वङ्गाय वात्सल्यादयमुत्कण्ठते जनः ॥ २१ ॥

( परिष्वज्य । स्वगतम् । ) तत्किमपत्यमैयं दारकः ।

अङ्गादङ्गात्स्रुत इव निजस्नेहजो देहसारः
प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेवं ।
सान्द्रानन्दक्षुभितहृदयप्रस्रवेनेव सृष्टो
गात्रं श्लेषे यदमृतरसस्रोतसा सिञ्चतीव ॥ २२ ॥

---

**अहो इति** । प्रसादः पारुष्यराहित्यं तस्मिन् भवं प्रासादिकम् । प्रसादगुण एवास्य रूपस्य उपादानकारणमिति भावः । रूपं विग्रहः । पावनः स्वसंबन्धानामन्येषामपि शुद्धिहेतुः । अनुभावः व्यवसायविशेषश्च । अहो विस्मयनीयावित्यर्थः । रामायणकविः रामायणप्रणेता वाल्मीकिलक्षणकविः देवीं वाचं वाग्देवीमवीवृधत् इति स्थाने युक्ता । वृधधातोर्लुङि णिचि चङ् द्वित्वम् ।
**अमृताध्मातेति** । अमृताध्मातजीमूत इव सुधापूरितकालमेघवत् स्निग्धं संहननं गात्रं यस्य तथोक्तस्य । 'गात्रं वपुः संहननम्' इत्यमरः । ते तव परिष्वङ्गाय आलिङ्गितुमुत्कण्ठते । 'सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिसन्क्ते । तत्प्राप्तीच्छां ससंकल्पामुत्कण्ठां कवयो विदुः ॥' इत्युक्ताभिलापवान्भवति । अयं जन इत्युक्तेः दर्शनीयत्वरूपवस्तुध्वनिः ॥ २१ ॥ किमित्ययं च दारकः ।
**अङ्गादङ्गादित्यादि** । अत्र गद्यस्थायंपदस्य पद्यस्थसशब्देन संबन्धात् दारकविशेषणत्वम् । एवं च सोऽयं समस्तविलक्षणो बुद्धिस्थश्च दारकः बालकः । अङ्गादङ्गात् सर्वेभ्योऽङ्गेभ्यः स्रुतः क्षरितः स्नेहजः स्नेह एव मैत्र्येव स्नेहः द्रवद्रव्यं तस्मिन् जातः निजः नैसर्गिकः । देहे रूपलावण्यसौन्दर्यसमुदयात्मके शरीरे यः सार उत्कृष्टरूपलावण्यसौन्दर्यसमुदाय इव स्थितः । स्वरसग्राहिणो जलादिद्रवद्रव्यं संयोज्यैव स्वरसं गृह्णन्ति । तद्वत्प्रकृष्टेऽपि स्नेहलक्षणद्रवद्रव्यसंबन्धेन गाढाश्लेषरूपसंघट्टनवशाद्बहिःस्रुतः स्वदेहसार इवेत्युत्प्रेक्षा । स्नेहज इति श्लिष्टरूपकानुप्राणिता च । अत्राङ्गादङ्गात्संभवसि हृदयादभिजायसे इति

समासमपरिग्रह करोतु तातः ।

**रामः**——यदभिरुचितं वत्सस्य[3] ।

( सर्वे परिक्रम्य यथोचितमुपविशन्ति । )

**रामः**—( स्वगतम् । )

**अहो प्रश्रययोगेऽपि गतिस्थित्यासनादयः ।**
**साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च ॥ २३ ॥**

**वपुरविहित[4]सिद्धा एव लक्ष्मीविलासाः**
**प्रतिक[5]लकमनीयं कान्तिमुत्केतयन्ति ।**
**अमलिनमिव र[6]त्नं रश्मयस्ते मनोज्ञा**
**विकसितमिव[7] पद्मं बिन्दवो माकरन्दाः ॥ २४ ॥**

**भूयिष्ठां च रघुकुलकुमारच्छायामनयोः पश्यामि ।**

---

श्रुतिः प्रत्यभिज्ञाप्यते । एकः चेतनाधातुश्चैतन्यैकरसे आत्मवस्तुनि एकदेशः बहिः प्रादुर्भूय स्थित इव साक्षात्कारार्हः सन् स्थित इव । सान्द्रानन्दक्षुभितस्य घनतरानन्देन क्षोभं प्राप्तस्य हृदयस्य प्रस्नवेन प्रकृष्टसेकेनावसिक्तः आर्द्रीकृतः गाढः दृढः श्लेष आश्लेषो यस्य तथोक्तः सन् सोऽयं दारकः गाढाश्लेषः सन् हिमच्योतं हिमवर्षमाशंसतीव सूचयतीव । किमिति विस्मये ॥ २२ ॥ ललाटंतपः ललाटं तपतीति विग्रहः । खच्प्रत्यये मुमागमः मध्याह्नसूर्य इति भावः । तदा हि सर्वासु दिक्षु ललाटातपसंयोगोपरिहार्यः । अन्यदा तु न तथा । यथोचितं पितृत्वपुत्रत्वानुगुणम् ॥ **अहो इति** । प्रश्रययोगेऽपि विनयसंबन्धेऽपि । साम्राज्यशंसिनः सार्वभौमत्वसूचकाः गतिस्थित्यासनादयः । आदिशब्देनोक्तिवीक्षणादिपरिग्रहः भावाः क्रियाः सन्ति । अहो विस्मयनीयम् ॥ २३ ॥ **वपुरिति** । अवियुतसिद्धाः अपृथक्सिद्धाः लक्ष्मीविलासाः लावण्यातिशयाः प्रतिकलकमनीयामनुक्षणरमणीयां कान्तिं चारुतां वपुः शरीरं कर्म । वपुः कान्तिमुद्भेदयन्ति । द्विकर्मकोऽयं धातुः । उत्पादयन्तीत्यर्थः । स्वे स्वीयाः रश्मयः मयूखाः अमलिनं निष्कलङ्कं चन्द्रमिव । माकरन्दाः मकरन्दसंबन्धिनः बिन्दवः कणाः विकसितं त्यक्तमुकुलीभावमरविन्दमिव च वपुः कान्तिमुद्भेदयन्ति ॥ २४ ॥ अनयोः कुशलवयोः भूयिष्ठं अतिशयेन बहु रघु॰

---

१ तपस्तपति. २ छायायां. ३ वत्साय. ४ अवियुत. ५ प्रतिजन; कमनीयां.

कठोरपारावतकण्ठमेचकं

वपुर्वृषस्कन्धसुबन्धुरांसकम् ।
प्रसन्नसिंहस्तिमितं च वीक्षितं
ध्वनिश्च माङ्गल्यमृदङ्गमांसलः ॥ २५ ॥

( निपुणं निरूप्य । ) अये न केवलमस्मद्वंशसंवादिन्याकृतिः ।

अपि जनकसुतायास्तच्च तच्चानुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥ २६ ॥

मुक्ताच्छदन्तच्छविसुन्दरेयं
सैवोष्ठमुद्रा स च कर्णपाशः ।
नेत्रे पुनर्यद्यपि रक्तनीले
तथापि सौभाग्यगुणः स एव ॥ २७ ॥

( विचिन्त्य । ) तदेतत्प्राचेतसाध्युषितमरण्यं यत्र किल देवी परित्य-

---

कुलकौमारं रघुवंशसंबन्धिबालत्वम् । कठोरेति । कठोरपारावतकण्ठवत् प्राप्तयौवनकपोतकण्ठवन्मेचकं नीलम् । वृषस्कन्धवद्वृषभककुदिव सुबन्धुरं सुन्दरमंसं भुजशिखरं ययोस्तथोक्तयोः । प्रसन्नसिंहवत्कार्कश्यरहितसिंहवीक्षितवत् स्तिमितमतरलम् । माङ्गल्यमृदङ्गवन्मङ्गलार्थमृदङ्गध्वनिवन्मांसलः स्फीतः । हितादित्वाद्यत्प्रत्यये सति प्रज्ञाद्यणि च आदिवृद्धौ माङ्गल्यशब्दसिद्धिः ॥ २५ ॥ निपुणं निरूपयन् सम्यग्विचारयन् । आकृतिरस्मद्वंशसंवादिनी केवलं न भवति अस्मद्वंशसंवादः अस्मत्कुलसादृश्यं सोऽस्यास्तीति विग्रहः । अपीति । तच्च तच्चावयवादिकं गुणजातमेवं च जनकसुतायाः सीतायाः अनुरूपं सदृशं तच्चावयवादिकमिह शिशुयुग्मे कुशलवयोः स्फुटं व्यक्तम् । तच्च गुणजातं च नैपुणेनावहिततया उन्नेयं निश्चयार्हमस्ति विद्यते । क्रियाद्वयान्येकशेषः । अभिनवशतपत्रस्य नूतनकमलस्य श्रीरिव श्रीर्यस्य तथोक्तमास्यं पुनरक्ष्णोर्गोचरीभूतमिव ननु भूयोऽपि चक्षुर्विषयीभूतमिव ननु संभाव्यते । द्वादशसु संवत्सरेषु चक्षुरगोचरमद्य गोचरतां गतमिति च्विप्रत्ययेन लभ्यते ॥ २६ ॥ शुक्लाच्छदन्तच्छविसुन्दरेयं ओष्ठमुद्रा अधरोत्तरोष्ठसंनिवेशः सैव सीताया एव । कर्णपाशः स एव सीतासंबन्ध्येव । नेत्रे

कौ। इयं चानयोराकृतिर्वयोऽनुभावश्च। यदपि स्वतःप्रकाशान्यस्त्रा-णीति तत्र विमृशामि। अपि खलु तच्चित्रदर्शनप्रासङ्गिकमस्त्राभ्यनु-ज्ञानमुद्भूतं स्यात्। न ह्यसंप्रदायिकान्यस्त्राणि पूर्वेषामप्यनुशुश्रुम। अयं च संप्लवमानमात्मानं सुखदुःखातिशयो हृदयस्य मे विस्रम्भयते। यमाविति च भूयिष्ठमात्मसंवादः। भूयिष्ठं च मया द्विधा प्रतिपन्नो देव्या गर्भिणीभावं आसीत्। ( सास्रम्। )

पुरा रूढे स्नेहे परिचयविकासादुपचिते
रहो विस्रब्धाया अपि सहजलज्जाजडदृशः।
मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया ॥ २८ ॥

---

साध्युषितं वाल्मीकिकर्तृकवासाधिकरणं। यत्रारण्ये। आकृतिरवयवसंस्थानवि-शेषः। इयमीदृशी। वयः द्वादशवत्सरपरिमितमित्यर्थः। अनुभावश्च प्रभावश्च ईदृश इति शेषः। अस्त्राणि जृम्भकाणि स्वतःप्रकाशानि गुरूपदेशेन विना ज्ञातानीति यत्। तत्रापि चित्रदर्शने प्रासङ्गिकं प्रसङ्गानुप्रसक्तं शस्त्राभ्यनुज्ञानं सर्वथा त्वत्प्रसवमुपस्थास्यन्तीत्यत्र कृतं प्रवुद्धं स्यात्तथा संपादनेन प्रकटं भवे-दिति स्मरामीत्यन्वयः। हि यस्मादसंप्रदायकानि गुरूपदेशक्रमरहितानि अस्त्राणि पूर्वेषामपि मनुप्रभृतीनामपि नेत्यनुशुश्रुम। तस्मात्प्रवुद्धं स्यादिति तत्रापि स्मरा-मीति पूर्वेण संबन्धः। विस्मये संप्लवमानः मज्जन् सुखदुःखातिशयः हृदयस्य विप्रलम्भः विप्रयोगशृङ्गारः। प्रायेण हि स्वरूपसंतापेन प्रियजनसंयोगविप्रयोगौ सुखदुःखहेतू भवतः। विस्मयसंप्लवमानेत्यनेन विस्मयस्य प्रवाहात्मकत्वं ध्वन्यते। अजले प्लवनासंभवात्। यमाविति द्वाविति। आत्मसंवादः प्रकृतानुभूयमानयम-त्वानुरूपस्वपूर्वानुभवः। भूयिष्ठम्। बहुतम इत्यर्थः। सामान्ये क्लीबत्वम्। जीवद्द्वयं यदपत्यं तस्य चिह्नं सूचितं यस्मिंस्तथोक्तः। पुरामिति। स्नेहे परि-चयस्य संततसाक्षात्कारस्य विकासादतिशयात्परां कोटिमपकर्षासमानाधिकरणो-त्कर्षमधिगते प्राप्ते सति। रहो विस्रब्धाया अपि लज्जाविरोधिस्वैरस्थित्यापाद-कदशाविशेषाहीया अपि। अर्हे क्तः। सहजलज्जाजडदृशः अपरिहरणीयलज्जा-गुणेनाधीरलोचनायां आदौ प्रथमं करतलपरामर्शकलया पाण्युदरपरिमार्जन-विद्यया। कलाशब्देन सूक्ष्मदर्शनं ध्वन्यते। ग्रन्थिः मांसिका द्विधा अपत्यद्वय-

लवः—तात किमेतत् ।

बाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम् ।
अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम् ॥ २९ ॥

कुशः—अयि वत्स

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति ।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमेवं त्वं पृच्छस्यनधिगतरामायण इव ॥ ३० ॥

रामः—( स्वगतम् ) अये तटस्थित आलापः । कृतं प्रश्नेन । मुग्ध-हृदय कोऽयमाकस्मिकस्ते स्नेहपरिप्लवो विकारः । एवं च निर्भिन्नहृदयावेगः शिशुजनेनाप्यनुकम्पितोऽस्मि । भवतु तावदन्तरयामि । (प्रकाशम्) वत्सा रामायणं रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिष्यन्दः प्रशस्तिरादित्यवंशस्य । तत्र कौतुहलेन यत्किंचिच्छ्रोतुमिच्छामि ।

---

रूपप्रकारद्वययुक्तः ज्ञातः निश्चितः । तदनु मज्ज्ञानानन्तरं कैर्दिवसैः कतिपयदिवसैस्तयापि ज्ञातः सीतयाप्यवगतः ॥ २८ ॥ केनचिदुपायेन अनिर्धारणीयेन व्याजेन ॥ **बाष्पवर्षेणेति** ॥ जगन्मङ्गलं जगदभ्युदयहेतुभूतं वः आननमवसिक्तस्य पुण्डरीकस्य । विरहपाण्डिम्ना पुण्डरीकत्वोक्तिः । चारुतां शोभां नीतं प्रापितम् । निदर्शनालंकारः ॥ २९ ॥ **विनेति** । सीतादेव्या विना सीतावियोगो रघुपतेः किं वा दुःखं न सर्वं दुःखात्मकम् । कृत्स्नं जगत्प्रियानाशे प्रियायाः अदर्शने अरण्यं भवति हि । स च स्नेहः सीताविषयकः प्रणयः स तावानपरिमितः । वियोगः निरवधिरवसानशून्यः । अनाधिगतरामायण इवानधीतरामायण इव पृच्छसि ॥ ३० ॥ तटस्थः अस्मज्जिज्ञासितसीतापुत्रत्वास्पर्शनेन उक्तमित्यर्थः । आकस्मिकः निष्कारणिकः संप्लवाधिकारः प्लुतगमनान्वयः दुर्लभविषयमनोरथायासः किमर्थं इति यावत् । अन्तरयामि छादयामि । सरस्वत्याः वाण्याः निष्यन्दः द्रवः । आदित्यवंशस्य प्रशस्तिः प्रख्यातिहेतुः । रामायणं रामायणमिति श्रूयते । श्रवणबहुत्वाभिप्रायं द्विरुक्तम् । तत्र तदेकदेशं यत्किंचिच्छ्रोतुमिच्छामि । कौतूहलं हर्षः ॥ कृत्स्न एव सकल एव संदर्भः ग्रन्थः आवृत्तः उपाध्यायासहकारेण स्वमात्रेणोच्चारणानुकूलावृत्तिविशेषः कृतः । स्मृतौ प्रत्युप-

**कुशः**—स कृत्स्न एव सदर्भोऽस्माभिरावृत्तः। स्मृतिप्रत्युपस्थितौ तावदिमौ बालचरितस्यान्त्येऽध्याये द्वौ श्लोकौ।

**रामः**—उदीरयतु वत्सः।

**कुशः**—

> प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः।
> प्रियभावः स तु तया स्वगुणैरेव वर्धितः॥ ३१॥
> तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत्।
> हृदयं त्वेव जानाति प्रीतियोगं परस्परम्॥ ३२॥

**रामः**—कष्टमतिदारुणोयं हृदयमर्मोद्घातः। हा देवि एवं किल तदासीत्। अहो निरन्वयविपर्यासविरसवृत्तयो विप्रलम्भपर्यवसायिनस्तापयन्ति संसारवृत्तान्ताः।

---

स्थितौ अद्य स्मृतिविषयभूतौ। बालचरितस्य बालकाण्डस्यान्ते सर्गान्ते द्वौ श्लोकौ द्वे पद्ये॥ वत्सौ संबोधनाद्विवचनम्। उदीरयतं वदतम्। विधौ लोण्मध्यमद्विवचनम्। **प्रियात्विति**। सीता पितृकृतादारा इत्येव रामस्य गुणैः शीलादिभिः। रूपगुणैरभूषितेष्वप्यङ्गेष्विति लक्षणलक्षितरूपप्रभृतिगुणैश्च प्रीतिर्भूयोऽप्यवर्धित॥ ३१॥ **तथैवेति**। तथैव यथा रामस्य सीता प्रिया तथा रामः सीतायाः प्रियोऽभवत्। हृदयं त्वेव। एवकारेण सीतारामयोरपि स्वप्रीतिज्ञानव्यावृत्तिः। प्रीतियोगं प्रीतेरुत्तरोत्तरवृद्धिसंनाहम्। 'योगः संनहन—' इत्युक्तेः। जानाति॥ ३२॥ हृदयमेव मर्म मर्मस्योद्घातः प्रहारः दारुणः दुःसहः। **हा देवीत्यादि**। एतद्वक्ष्यमाणमेवमासीद्वक्ष्यमाणप्रकारेणासीत्। यद्वा 'प्रिया तु—' इत्यादिश्लोकद्वयोक्तमेवमासीद्यथोक्तमभूत्। हा दुःख्यते। **अहो इत्यादि**। निरन्वयविपर्यासे निरन्वयविनाशे। 'अयं तु विप्रलम्भः' इत्युक्तेः विश्लेषस्य निरन्वयविनाशत्वोक्तिः। दीपस्य निर्वाणजन्यो ध्वंसः निरन्वयविनाशः। तस्यैव उत्तरोत्तरदशासंक्रमणलिङ्गानुमेयो ध्वंसोऽन्यः। सीताया मरणरूपेऽस्मिन्निरन्वयविनाशे विप्रलम्भस्मृतिपर्यवसायिनः। विप्रलम्भश्च स्मृतिश्च विप्रलम्भस्मृती। विप्रलम्भो वञ्चनं तच्च परेच्छाधीनभ्रमः। स्मृतिर्भूतपूर्वविषयकं ज्ञानम्। तत्पर्यवसायिनस्तद्विषयतामात्रवन्तः दैववञ्चनास्मरणमात्रविषयाः संसारवृत्तान्ताः प्रणयभोगादयः। न तु वस्तुसत्तावन्त इति भावः। यद्वा। निरन्वयविपर्यासात्मको विप्रलम्भः अन्यतरनाशात्मकविरहहेतुकविप्रलम्भशङ्का-

क तावानानन्दो निरतिशयविस्रम्भबहुलः
क वाऽन्योन्यप्रेम क च नु गहनाः कौतुकरसाः ।
सुखे वा दुःखे वा क नु खलु तदैक्यं हृदययो-
स्तथाप्येष प्राणः स्फुरति न तु पापो विरमति ॥ ३३ ॥

भोः कष्टम् ।

प्रियागुणसहस्राणामेकोन्मीलनपेशलः ।
य एव दुःस्मरः कालस्तमेव स्मारिता वयम् ॥ ३४ ॥

तदा किंचित्किंचित्कृतपदमहोभिः कतिपयै-
स्तदीषद्विस्तारि स्तनमुकुलमासीन्मृगदृशः ।

---

रास्तस्मिन् स्मृतिपर्यवसायिनः स्मृतिविषयतामात्रवन्तो भवन्तीत्यर्थः । अभिलाषेर्ष्याप्रवासकलहविरहहेतुत्वेन विप्रलम्भशृङ्गारस्य पञ्चविधत्वात् । 'संभोगो विप्रलम्भश्च शृंगारो द्विविधो मतः । संयुक्तयोस्तु संभोगो विप्रलम्भो वियुक्तयोः ॥' इत्यादिकमिहानुसंधेयम् । युक्तश्चायमर्थः । नाटकस्थविप्रलम्भशृङ्गारपरत्वस्वारस्यात् । केचित्तु अन्वयश्च विपर्यासश्च अन्वयविपर्यासौ । अन्वयव्यतिरेकावित्यर्थः । तौ न विद्येते येषां ते निरन्वयविपर्यासाः । अन्वयव्यतिरेकशून्या इत्यर्थः । विप्रलभ्यन्ते भ्राम्यन्ते एभिरिति विप्रलम्भाः । बाहुलकः करणे घञ्प्रत्ययः । अन्वयव्यतिरेकशून्यत्वेन सद्विलक्षणतया तुच्छत्वेन विषयतासंबन्धेन भ्रममात्रहेतवः स्मृतिपर्यवसायिनः स्मृतिमात्रविषयातीतघटादिवदर्थक्रियाकारित्वविधुरा इति व्याचक्षते ॥ **केति** । निरतिशयेनानपकृष्टेन विस्रम्भेण भोगदशायां स्वैरस्थित्युपपादकलज्जाविरोधिज्ञानविशेषेण बहुलः स्फारः स तावानपरिमेयः आनन्दः । क गत इति शेषः । अन्योन्यस्य प्रेम परस्परविषयकं परस्पराधिकरणकं च प्रेम प्रणयः क । गहना अगाधाः कौतुकरसाः भोगाभिलाषाः क । हृदययोः मम तस्याश्च मनसोः सुखे वा दुःखे वा सुखदुःखानुभवकाले तदैक्यमभिन्नत्वं क । तच्छब्देन हृदयैक्यस्य दौर्लभ्यं द्योत्यते । तथापि एतेषु सर्वेषु गतेष्वपि पापः मरणप्रतिबन्धकपापवान् पापगुणसारत्वात्पापत्वव्यपदेशः । एष प्राणः आत्मा स्फुरति न विरमति न नश्यति ॥ ३३ ॥ **प्रियेति** । प्रियागुणसहस्राणां सौन्दर्यसौजन्याद्यनन्तगुणानाम् । संख्यायां द्विबहुत्वे स्तः इत्युक्तेः बहुवचनम् । क्रमेण उन्मीलनतत्परः प्रकाशनासक्तः यः कालः दुस्सहस्तमेव कालं वयं स्मारितास्तद्विषयकस्मरणवन्तः कृताः ॥ ३४ ॥ **यदेति** । कृतपदं सूचितरेखाकारसंनिवेशं तत् मृगदृशः

प्रगल्भव्यापारः स्फुरति हृदि मुग्धश्च वपुषि ॥ ३५ ॥

लवः—अयं च मन्दाकिनीचित्रकूटवनविहारे सीतादेवीमुद्दिश्य रघुपतेः श्लोकः—

त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमग्रतः ।
यस्यायमभितः पुष्पैः प्रवृष्ट इव केसरः ॥ ३६ ॥

रामः—( सलज्जास्मितस्नेहकरुणम् ) अति हि नाम मुग्धः शिशुजनः, विशेषतस्त्वरण्यचरः । हा देवि स्मरसि वा तस्य प्रदेशस्य तत्समयविस्रम्भातिप्रसङ्गसाक्षिणः ।

श्रमाम्बुशिशिरीभवत्प्रसृतमन्दमन्दाकिनी-
मरुत्तरलितालकाकुलललाटचन्द्रद्युति ।

---

घनः मेदुरता यतः । यादृशकालहेतुक इत्यर्थः । 'वयःस्नेहाकूत—' इति पाठे तु—यत्र काले वयसस्तारुण्यस्य स्नेहस्यानुरागस्य आकूतस्याभिप्रायस्य च व्यतिकरेण घनः सान्द्रः । धर्मपरो धर्मिपरश्चायं शब्दः मदनविशेषणम् । मदनः मन्मथः कर्ता हृदि प्रगल्भव्यापारः सन् मनस्यतिशयितशरपातनादिचेष्टायुक्तः सन्वपुषि मुग्धश्च सन्नप्रकटः सन् स्फुरति वर्तते । तमेव कालं स्मारिता वयमित्यन्वयः । अनेन श्लोकेन मुग्धालक्षणं स्फोरितं पादत्रयेण । उदयद्यौवना मुग्धेति दलमुक्तम् । तुरीयपादेन च लज्जाविजितमन्मथेति दलमुक्तम् ॥ ३५ ॥ चित्रकूटवर्त्मनि चित्रकूटपर्वतमार्गे मंदाकिनीविहारे गङ्गातीरनीरक्रीडायां सीतामुद्दिश्य सीताबोधेच्छया । **त्वदर्थमिति ।** अयं केशरः बकुलवृक्षः यस्याभितः यदीयेषु चतसृषु पार्श्वेषु प्रवृष्ट इव पुष्पकरणप्रवर्षणकर्तेत्युत्प्रेक्षते । सोऽयमायतः शिलापट्टस्त्वदर्थं विन्यस्त इव । उत्प्रेक्षाद्वयम् । अयमभितः केसरः परितो वर्तमानः केशरवृक्षः । यस्य प्रवृष्ट इव भविष्यत्त्वदुपवेशमूलकयदधिकरणपुष्पवृष्टिकर्तेत्युत्प्रेक्षते । अयं त्वदर्थं विन्यस्त इव । अयं श्लोको रामायणलेखकैः प्रभ्रंशित इति वदन्ति ॥ ३६ ॥ लज्जारहस्यप्रकाशनात् हृदयसंकोचः । स्मितं विस्मयात् । शिशुजनः अतिमुग्धो हि नामेति योज्यम् । अरण्यचरस्तु विशेषतो मुग्धः । तस्य पूर्वानुभूतस्य तस्मिन्समये 'त्वदर्थम्—' इत्यादिश्लोकार्थसमये यो विस्रम्भः लज्जाप्रतिघातेन स्वैरस्थित्यापादकज्ञानविशेषः तेन योऽतिप्रसङ्गः भोगातिमात्रता तस्यामित्यर्थः । स्मरसि । 'अधीगर्थदयेशां—' इति कर्मणि षष्ठी । **श्रमाम्ब्विति** । श्रमाम्बु-

निराभरणसुन्दरश्रवणपाशमुग्धं[1] मुखम् ॥ ३७ ॥

(स्तम्भित इव स्थित्वा । सकरुणम्) अहो नु खलु भोः ।

चिरं ध्यात्वा ध्यात्वा निहित इव निर्माय पुरतः
प्रवासेऽप्याश्वासं न खलु न करोति प्रियजनः ।
जगज्जीर्णारण्यं भवति च विकल्पव्युपरमे[2]
कुकूलानां राशौ तदनु हृदयं पच्यत इव ॥ ३८ ॥

(नेपथ्ये ।)

वसिष्ठो वाल्मीकिर्दशरथमहिष्योऽथ जनकः
सहैवारुन्धत्या शिशुकलहमाकर्ण्य सभयाः ।
जराग्रस्तैर्गात्रै[3]रथ खलु विदूराश्रमतया
चिरेणागच्छन्ति त्वरितमनसो[4]ऽपि श्रमजडाः ॥ ३९ ॥

---

शिशिरीभवत् इदं भिन्नं पदं मुखविशेषणम् । सुरतकालजस्वेदसलिलेन शीत-लीभवत् । अलकाकुला चूर्णकुन्तलैर्व्याप्ता । चन्द्रसदृशललाटद्युतिः यस्य तथो-क्तम् । संजातः कलङ्को यस्मिन् कलङ्कितः । कुङ्कुमेन कलङ्कितो न भवतीत्यकुङ्कु-मकलङ्कितः । अत एवोज्ज्वलः लावण्यातिरोधानेन प्रकाशमानः कपोलो यस्य तथोक्तम् । कुङ्कुमस्य कलङ्कत्वोक्त्या न केवलमाभरणस्याभरणं किंतु आभरणा-सहमिति व्यज्यते । निराभरणस्ताटङ्कमौक्तिकगुच्छादिभूषणरहितोऽपि सुन्दरः यः श्रवणपाशः पाशसदृशकर्णसंनिवेशस्तेन मुग्धं सुन्दरमुत्प्रेक्ष्यते संभाव्यते ॥ ३७॥ **चिरं ध्यात्वेत्यादि** । अत्र श्लोके स्थितस्य जनस्येत्यध्याहार्यम् । प्रियजनः कर्ता प्रवासे देशान्तरगमने चिरं ध्यात्वा ध्यात्वा स्थितस्य पुरतो निर्माय निहित इव । अनवरतभावनाप्रकर्षयुक्तस्य जनस्य पुरस्तावत्तेन भावनाप्रकर्षेण सृष्ट्वा स्थापित इव । आश्वासं न करोतीति न स्वस्य पुनरागमनेन संतोषं करोत्येव । प्रियजने प्रोषितं ध्यायति सति तदानीमागतः प्रोषितस्तेन ध्यानेन सृष्ट इत्युत्प्रेक्षार्ह इति भावः । कलत्रे ह्युपरते च कलत्रनाशे तु जगत्कर्तृ जीर्णारण्यं शून्यकल्पं भवति । प्रवासवत्पुनरागमनकलङ्काभावेन भा-वनाप्रकर्षस्यालीकत्वान्नाश्वासहेतुरिति भावः । तदनु जगज्जीर्णारण्यकानन्तरं हृदयं कर्तृ कुकूलानां राशौ तुषाग्नीनां समुदाये पच्यत इव पक्वं भवति । कर्म-कर्तृलकारोऽयम् । आतिदेशिकयगादयः ॥ ३८ ॥ दशरथमहिष्यः कौसल्या-दयः शिश्वोर्लवचन्द्रकेत्वोः कलहं युद्धमाकर्ण्य जरया वार्धकप्रयुक्तशैथिल्येन

कष्टं कथं खल्वेते द्रष्टव्याः । ( सकरुणं विलोक्य । ) अहह तातजनकोऽपि दैवादत्रैवायात इति वज्रेणेव ताडितोऽस्मि मन्दभाग्यः ।

संबन्धस्पृहणीयताप्रमुदितै[1]र्जुष्टैर्वसिष्ठादिभि-
र्दृष्ट्वापत्यविवाहमङ्गलमहे[2] तत्तातयोः संगतम्[3] ।
पश्यन्नीदृशमीदृशे[4] पितृसखं वृत्ते महावैशसे
दीर्यें किं न सहस्रधाहमथवा रामेण किं दुष्करम् ॥ ४० ॥

( नेपथ्ये । )

भो भोः कष्टं कष्टम् ।

अनु[5]भावमात्रसमवस्थितश्रियं
सहसैव[6] वीक्ष्य रघुनाथमीदृशम् ।
प्रथमप्रबूढ[7]जनकप्रबोधनाद्
विधुराः प्रमोहमुपयान्ति मातरः ॥ ४१ ॥

**रामः**—हा तात हा मातरः हा जनक

जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।
तस्मिन्नकरुणे पापे वृथाः व करुणा मयि ॥ ४२ ॥

---

भावः सुदूराश्रमता । तया चिरेण बहुकालेन ॥ ३९ ॥ कथं द्रष्टव्याः केन प्रकारेण द्रष्टव्याः । तातजनकोऽपि भार्यापितृत्वात्स्वपितृत्वोपचारः वज्रेणेव अशनिघातेनेव ताडितोऽस्मि व्यथितोऽस्मि । **संबन्धेति** । संबन्धस्यापत्यसंबन्धस्य स्पृहणीयतया श्लाघ्यतया प्रमुदितैः प्रकृष्टमोदयुक्तैः वसिष्ठादिभिः । आदिशब्देन गौतमकौशिकादिपरिग्रहः । अपत्यविवाहमङ्गलविधौ मम तस्याश्च पाणिग्रहणकर्मणि । तत्तातयोस्तथाविधजनकदशरथयोः संगमं संमेलनं दृष्ट्वा महावैशसे वृत्ते सीतात्यागरूपमहाहिंसायां पितृसखं जनकमीदृशमत्यन्तदुःखितमीदृशः पश्यन् वैशसनिमित्तभूतः पश्यन्नहं किं कुतः सहस्रधा अनन्तभागतया न दीर्यें विदारितो न भवामि । अथवा विदारणाभावे रामेण दुष्करं दारणाभावो वा इतोऽप्यन्यद्वा सर्वं सुकरमिति भावः ॥ ४० ॥ **अनुभावमात्रेति** । अनुभावमात्रेण अतितरसाधारणमहापुरुषत्वेन समवस्थिता समवस्थार्हा निश्चयार्हा श्रीरैश्वर्यं यस्य तथोक्तम् । प्रथमप्रबुद्धेन कौशल्याद्यपेक्षया पूर्वोत्पन्नप्रत्यभिज्ञापकेन जनकेन प्रबोधिताः प्रत्यभिज्ञापिताः मातरः अनुभावमात्रसमवस्थितश्रियमीदृशं रघुनाथं वीक्ष्य विधुराःसत्यःशून्यकरणाःसत्यः प्रमोहं प्रकृष्टां मूर्च्छामुप-

**कुशलवौ**—इत इतस्तातः।

( सकरुणाकुलं परिक्रम्य निष्क्रान्ताः सर्वे । )

**इति कुमारप्रत्यभिज्ञानो नाम षष्ठोऽङ्कः।**

---

## सप्तमोऽङ्कः।

---

( ततः प्रविशति लक्ष्मणः । )

**लक्ष्मणः**—भो भो अद्य खलु भगवता वाल्मीकिना सब्रह्मक्षत्र-पौरजानपदाः प्रजाः[2] सहास्माभिराहूय कृत्स्न एव सदेवासुरतिर्यगुर-

---

गोत्रमङ्गलमखण्डं कुलश्रेयः। तत्रापि तथाविधसीतायामपि अकरुणे तद्दुःखाधीनदुःखवत्त्वरूपकरुणारहिते मयि वः युष्माकं करुणा मद्दुःखाधीनदुःखवत्ता वृथा। दयया सर्वभूतेषु इत्युक्तादृष्टविशेषमात्ररूपप्रयोजनेनापि शून्येत्यर्थः ॥ ४२ ॥ यावत्संभावयामि अभ्युत्थानाभिवादनादिभिः पुरस्करिष्यामि । यावत्पुरानिपातयोः भविष्यदर्थे लट् । इत्युत्तिष्ठति उत्थानमभिनयति ॥ इत इतस्तातः। अत्रागच्छत्विति शेषः। मार्गदर्शनपरमिदं वाक्यम् ॥ निष्क्रान्ताः । रङ्गस्थानादिति शेषः । सर्वे । वसिष्ठाद्येतदङ्काभिनेयभूमिकाधारिण इत्यर्थः ॥

दाशरथिवंशजनुषो भूसारनिवासवीरराघवार्यस्य ।
उत्तररामचरित्रव्याख्यायामवसितोऽङ्कः षष्ठः ॥

**इति श्रीवाधूलवीरराघवविरचितायां भवभूतिभावतल-स्पर्शिनीसमाख्यायामुत्तररामचरितव्याख्यायां**

**षष्ठोऽङ्कः।**

---

अथ समग्रप्रयोजनकोडीकाररूपनिर्वहणसंधिं सप्तमेन वक्ष्यन् चमत्कृतिविशेषलाभाय परित्यागानन्तरभाविनीं सीतायाः दशामन्तर्नाटकेन विवक्षुस्तदुपक्षेपिकां लक्ष्मणप्रवेशवतीं रङ्गरचनामाह—**ततः प्रविशति लक्ष्मण इति।** ततः षष्ठाङ्कप्रयोगादनन्तरम् । **भोः किं नु खल्वित्यादि** । भो इति हृदयं प्रति संबुद्धिः । किं नु संनिधापित इति योजना । भगवता षाड्गुण्यवता । ब्रह्म ब्राह्मणाः क्षत्रं क्षत्रियाः पौरा अवशिष्टाः पुरवासिजनाः जानपदाः देशवासिजनाः एतैः सहिताः । अस्माभिः सह प्रजा आहूय कृत्स्न एवाखण्ड एव

आदिष्टश्चाहमार्येण—वत्स लक्ष्मण भगवता वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमन्त्रिताः स्मः । तद्गङ्गातीरमातोद्यस्थानमुपगम्य क्रियतां समाजसंनिवेशः इति । कृतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानसंनिवेशो मया । अयं तु—

**राज्याश्रमनिवासेऽपि प्राप्तकष्टमुनिव्रतः ।**
**वाल्मीकिगौरवादार्य इत एवाभिवर्तते ॥ १ ॥**

( ततः प्रविशति रामः । )

**रामः**—वत्स लक्ष्मण अपि स्थिता रङ्गप्रेक्षकाः ।

**लक्ष्मणः**—अथ किम् ।

**रामः**—इमौ पुनर्वत्सौ कुशलवौ कुमारचन्द्रकेतुसदृशीं स्थानप्रतिपत्तिं लम्भयितव्यौ ।

---

वर्गस्तेन सहितः भूतानां प्राणिनां ग्रामः समूहः । सचराचरः सस्थावरजङ्गमः । स्वप्रभावेण स्वतपःशक्त्यतिशयेन किं नु संनिधापितः । किं न्विति विस्मये । आर्येण रामेणादिष्टः आज्ञप्तः । स्वकृतिं स्वग्रन्थम् । अप्सरोभिः उर्वशीप्रभृतिभिः प्रयुज्यमानामभिनीयमानां द्रष्टुमुपनियन्त्रिताः स्मः आवश्यकत्वेनाहूता भवामः। गङ्गतीरं गङ्गाकूलाम् । आतोद्यस्य नृत्यगीतवाद्यसमुदायस्य स्थानं प्रवर्तनाधिकरणमुपगम्य प्राप्य समाजस्य सदसः संनिवेशः यथोचितस्थानविभागः क्रियतामित्यादिष्टश्चाहमिति पूर्वेणान्वयः। सीताया गङ्गाजलादुद्गमनसौकर्याय गङ्गातीरस्य रङ्गत्वकल्पनम् । सलिलादुपैतीति वक्ष्यते । मर्त्यः मरणार्हः अमर्त्यः तदनर्हः। मर्त्यश्चासावमर्त्यश्चेति विशेषणयोः समासः। नित्यानित्यात्मकस्येत्यर्थः। भूतग्रामस्य पृथिव्यादिभूतसमुदायस्य समुचितस्थानस्याधिकारानुरूपस्थानस्य संनिवेशः प्रतिष्ठापनम् । पूर्वमाज्ञापनप्रकारकथनमद्य त्वनुष्ठानकथनमिति न पुनरुक्तिः। अयं तु—**राज्येति** । राज्यं भूमिपरिपालनात्मकराजकर्म ।तदेवाश्रमः स्वैराचारप्रतिबन्धकनियमविशेषः । सुखाल्पत्वदुःखभूयस्त्वाभ्यामाश्रमत्वरूपणम् । प्राप्तं कष्टं दुःखरूपं मुनिव्रतं येन तथोक्तः । वाल्मीकौ वाल्मीकेर्वा गौरवं गुरुत्वप्रतिपत्त्या पूजनीयत्वानुसंधानेन ॥ १ ॥ रङ्गस्य नाट्यस्थानस्य प्राश्निकाः सामाजिकाः रङ्गस्थले राज्ञा सह द्रष्टार इत्यर्थः । प्रश्नं ज्ञातव्यार्थजिज्ञासामर्हन्तीति प्राश्निकाः । तदर्हाधिकारीयमत्र । समस्तशास्त्रनिष्णातहृदया इति भावः ॥ अथ किमित्यङ्गीकारे ॥ इमौ वत्सौ । कुशलवावित्यर्थः ।

सनम्[2] । तदुपविशत्वार्यः ।

रामः[3]—( उपविशति । )

लक्ष्मणः—प्रस्तूयतां भोः ।

सूत्रधारः—( प्रविश्य । ) भा भो भगवान्भूतार्थवादी प्राचेतसः सस्थावरजङ्गमं जगदाज्ञापयति—यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं करुणाद्भुतरसं च किंचिदुपनिबद्धं तत्र काव्यगौरवादवधातव्यमिति ।

---

कुमारश्चासौ चन्द्रकेतुश्च तेन समां प्रतिपत्तिं लालनीयत्वादिविधिं लम्भयितव्यौ प्रापयितव्यौ ॥ प्रभो राज्ञः । स्नेहेन कुशलवविषयप्रीत्या यः प्रत्ययस्तथैव कार्यमिति व्यवसायः । तस्मादिदं चास्तीर्णं राजासनं सिंहासनस्यास्तीर्णासंभवेऽपि अन्यत्तद्योग्यमासनमास्तीर्णमिति मन्तव्यम् । कृत्स्न एव सदेवासुरेति ब्रह्मेन्द्रादीनामपि तत्र संनिधापितत्वोक्त्या तदैकरूप्याय सिंहासनातिरेकेणास्तीर्णासनस्यैव युक्तत्वात् । एतेनात्र कवेः प्रमादवचनं प्रत्युक्तम् । अत एव 'स चापि रामः परिषद्गतः शनैर्बुभूषयासक्तमना बभूव ह' इति बालकाण्डश्लोके परिषद्गत इति सिंहासनादवरुह्य परिषदि जनानामुत्थानाशङ्कया शनैः स्थित इति व्याख्यातमस्मदाचार्यैः।सर्वे रामादय इत्यर्थः।प्रस्तूयतामभिनय आरभ्यतामित्यर्थः सूत्रधारः अन्तर्नाटकीयसूत्रधारः प्रविश्याहेत्यर्थः।भगवान् ज्ञानादिषाड्गुण्यपूर्णः। भूतार्थं सत्यमभिधेयं वदतीति भूतार्थवादी । 'सुप्यजातौ' इति णिनिः । 'युक्ते क्ष्मादावृते भूतम्' इति कोशः। प्रचेतसो वरुणस्यापत्यं पुमान् प्राचेतसः । स्थावरं च तज्जङ्गमं च। विशेषणयोः समासः।आज्ञापयति अकरणदण्डप्रयोजकविधिराज्ञां करोतीत्यर्थः । आर्षेणालौकिकेन चक्षुषा दृष्ट्या योगजप्रत्यासत्तिसहकृतपरिशुद्धान्तःकरणेन समुद्वीक्ष्य सम्यगतिशयेन साक्षात्कृत्य । अत्र 'रहस्यं च प्रकाशं च यथावत्संप्रपश्यसि' इत्यादिकं द्रष्टव्यम् । पावनं स्वदर्शनादन्येषां शुद्धिजननम्। अनेन 'काव्यालापांश्च वर्जयेत्' इति निषेधोऽन्यपर इति सूचितम् । वचनरूपममृतं सुधा यस्मिंस्तथोक्तम् । भोग्यत्वेन सादृश्यरूपणम् । करुणश्चाद्भुतश्च करुणाद्भुतौ रसौ यस्मिंस्तथोक्तम् । इष्टजनवियोगजन्यदुःखातिभूमिरूपः शोकः सहकारिभूतविशिष्टदेशकालकाव्यनिपुणनटचेष्टादिवशात्सामाजिकैर्भाव्यमानो निरतिशयस्वप्रकाशानन्दमयरसतां प्रतिपाद्यत इति रसविदां संप्रदायः । अद्भुतश्च तथाविधो विस्मयः ।

रामः [illegible]
ममृतसाराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद्व्याहन्यन्त इति नाभिशङ्कनीयानि ।

( नेपथ्ये । )

हा अज्जउत्त हा कुमार लक्खण एआइणिं मन्दभाइणिं असरणं अरण्णे आसण्णप्पसववेअणं हदासं सावदा मं अहिलसन्दि । साहं दाणिं मन्दभाइणी भाईरईए अत्ताणं णिक्खिविस्सम् । ( क )

**लक्ष्मण**—( आत्मगतम् ) कष्टं बतान्यदेवं किमपि ।

---

( क ) हा आर्यपुत्र हा कुमार लक्ष्मण एकाकिनीं मन्दभागिनीमशरणामरण्य आसन्नप्रसववेदनां हताशां श्वापदा मामभिलषन्ति । साहमिदानीं मन्दभागिनी भागीरथ्यामात्मानं निक्षेप्स्यामि ।

---

किंचिन्मार्गरूपकमित्यर्थः । उपनिबद्धं ग्रथितम् । तत्र रूपके काव्यगौरवात्काव्यस्य रूपकरूपस्य तद्गौरवान्महनीयत्वादवधातव्यं मनसो विषयान्तरसंचारराहित्यरूपमवधानं कर्तव्यमित्याज्ञापयतीति संबन्धः ॥ साक्षात्कृतो धर्मोऽलौकिकश्रेयःसाधनरूपो यैस्तथोक्ताः । महान्तश्च ते, ऋषयः महर्षयः । 'ऋषयः सत्यवचसः' इत्यमरः । 'अमृतंभराणि' इति क्वचित्पाठः । इदं च पदद्वयम् । बिभर्तीति भरम् । पचाद्यच् । त्रिलिङ्गत्वान्नपुंसकबहुवचनोत्पत्तौ भराणीति भवति । अमृतमिति कर्मणि द्वितीया । अमृतकर्मकभरणकर्तॄणीत्यर्थः । 'कर्तृकर्मणोः कृति' इत्यस्यानित्यत्वान्न षष्ठी । तद्व्यापकं तदर्हम्, अन्तर्धानेनादर्शनमिति निर्देशद्वयमिति स्पष्टं व्याकरणपरिशीलनशालिनाम् । 'धयैरामोदमुत्तमम्' इति भट्टिप्रयोगान्नाप्रयुक्तत्वशङ्का । एतेन 'अमृतंभराणि' इति कवेः प्रमाद इति वदन् व्याख्याता निरस्तः। अमृतभरणकर्तृत्वं चेह मोक्षसाधनत्वरूपम् । यद्वा । ऋतंभराणीति द्वारमर्थवन्ति । 'ऋतंभरां च मां प्राहुः' इत्युक्तेः संज्ञाशब्दत्वात्संज्ञायां खच्प्रत्ययः । 'ऋतंभराभिधानम्' इत्युक्तेश्च । रजसः पराणि परोरजांसि । परिशुद्धानीत्यर्थः । 'शुद्धमरजस्कं परोरजः' इति कोशः । तेषां भगवतां प्रज्ञानानि प्रमादरहितानि ज्ञानानि न व्याहन्यन्ते । अयथार्थानि न भवन्तीत्येतदुक्तं भवतीति पूर्वेणान्वयः । नहि शङ्कनीयानि । अप्रामाण्यसंशयार्हाणीत्यर्थः । **नेपथ्ये इति** । इदं चाङ्काभिनेयसीताप्रवेशाद्युपक्षेपकम् । एकाकिनीमेकाम् । आसन्नप्रसववेदनां समीपागतप्रसूतिव्यथाम् । हता ां व्यर्थमनो-

विश्वंभरात्मजा देवी राज्ञा त्यक्ता महावने
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥ २ ॥

( इति निष्क्रान्तः ।

### प्रस्तावना ।

---

**रामः**—( सावेगम् । ) देवि देवि क्षेणमवेक्षस्व[1][2] ।

**लक्ष्मणः**—आर्य[3] नाटकमिदम् ।

**रामः**—हा देवि दण्डकारण्यवासप्रियसखि एष ते रामाद्दैव[4]-दुर्विपाकः ।

**लक्ष्मणः**—आर्य द्दश्यतां[5] तावत्प्रबन्धार्थः ।

**रामः**—एष सज्जोऽस्मि वज्रमयः ।

( ततः प्रविशत्युत्सङ्गितैकैकदारकाभ्यां पृथिवीगङ्गाभ्यामवलम्बिता[6] सीता । )

**रामः**—वत्स लक्ष्मण असंविज्ञातमनिबन्धनमन्धतमसमिव प्रविशामि । धारय माम् ।

**देव्यौ**—

---

गङ्गायामात्मानं निक्षिपामि पातयामि॥ **विश्वंभरेति** । विश्वंभरात्मजा भूमेः सुता देवी कृताभिषेका। राज्ञा लक्ष्मणेन (रामेण?) । प्राप्तः प्रसवः यं प्राप्तप्रसवस्तम् । गङ्गा च सा देवी च तस्याम् ॥ २ ॥ **प्रस्तावनेति** । अन्तर्नाटकीयप्रस्तावना वृत्तेत्यर्थः ॥ सावेगं सभयम् । लक्ष्मणमवेक्षस्व मयि सापराधेऽपि त्वत्पुत्रं लक्ष्मणं दृष्ट्वा गङ्गायां न पतितव्यमित्यर्थः ॥ नाटकमिदमुच्यमानगङ्गापतनं नाटकं नाटकप्रयोज्याभिनयात्मकम् । न वास्तवमित्यर्थः ॥ रामाद्विपाकः रामहेतुकः दुःखानुभव इत्यर्थः । दण्डकेति विशेषणं तु साभिप्रायम् । मत्सुखं त्वदधीनं त्वद्दुःखं तु मदधीनमित्यर्थः ॥ आर्य आश्वस्य दुःखं लघूकृत्य । आर्षः ऋषिप्रणीतः। दर्शनाभावे मुनिः कुप्येदिति हृदयम् ॥ वज्रमयः अत्यन्तकाठिणः। सज्जोऽस्मि सीताविपत्तिनाटकं द्रष्टुं बद्धपरिकरोऽस्मि ॥ उत्सङ्गितः उत्सङ्गेन गृहीतः एकैको दारको याभ्यां तथोक्ताभ्यामवलम्बिता धारिता प्रमुग्धा प्रकृष्टमूर्छावती ॥ असंविज्ञातमविदितं पदनिबन्धनं स्थानसंबन्धो यस्मिंस्तथोक्ते ।

---

१ लक्ष्मणम् २ क्षमस्व ३ repeated in some eds. ४ रामाद्विपाकः ५ आश्वस्य

अन्तर्जले प्रसूतासि रघुवंशधरौ सुतौ ॥ ३ ॥

**सीता**—( समाश्वस्य । ) दिट्ठिआ दारए प्पसूदम्हि । हा अज्जउत्त । (क)

**लक्ष्मणः**—( पादयोर्निपत्य ।)आर्य आर्य दिष्ट्या वर्धामहे । कल्याणप्ररोहो रघुवंशः । ( विलोक्य । ) हा हा कथं क्षुभितबाष्पोत्पीडनिर्भरः प्रमुग्ध एवार्यः । ( वीजयति । )

**पृथिवी**—वत्से समाश्वसिहि ।

**सीता**—( समाश्वस्य । ) भअवदि का तुमं इअं अ । (ख)

**पृथिवी**—इयं ते श्वशुरकुलदेवता भागीरथी ।

**सीता**—भअवदि णमो दे णमो दे । (ग)

**भागीरथी**—चारित्रोचितां कल्याणसंपदमधिगच्छ ।

**लक्ष्मणः**—अनुगृहीताः स्मः ।

**भागीरथी**—इयं तु जननी ते विश्वंभरा ।

---

(क) दिष्ट्या दारकौ प्रसूतास्मि । हा आर्यपुत्र ।
(ख) भगवति का त्वमियं च ।
(ग) भगवति नमस्ते ।

---

पदनिबन्धनः पादन्यासो वा । मां धारय पतनप्रतिघातं कुरु ॥ **समाश्वसिहीति** । हे कल्याणि मङ्गलवति । संबुद्धिरियम् । वर्धसे श्रेयस्विनी भवसि। दिष्ट्या आनन्देऽयं शब्दः । अन्तर्जले जले अन्तः । प्रसूतासि उत्पादितवत्यासि रघुवंशधरौ रघुसंतानैकदेशौ दिष्ट्या दैवेन दुष्टसाधनसंपत्त्यभावात्प्रसूतिप्रतिबन्धकसद्भावाद्दैवमेवात्र कारणमिति भावः । सुन्दरकाण्डस्थदिष्ट्येतिपदस्य दैवेनेत्युत्थानार्थो वर्णितः ॥ ३ ॥ कल्याणः शुभकरः प्ररोहोऽङ्कुरो यस्य तथोक्तः ॥ मुञ्चतं त्यजतम् । लोट्मध्यमद्विवचनम् । मामिति शेषः । श्वशुरकुलस्य पत्युः पितृवंशस्य देवता योगक्षेमनिर्वाहिका भागीरथी । साभिप्रायं नामेह निर्दिष्टम् ॥ चारित्रस्य पातिव्रत्यसच्चरितस्य उचितामनुरूपां कल्याणसंपदं श्रेयःसंपत्तिम् ॥ अनुगृहीताः स्मः । रामः सीता अहं च क्षेमोपधायिकाशीर्विषयीकृता इत्यर्थः । सीताक्षेमे सर्वक्षेम इति हृदयम् ॥ जननी माता । विश्वंभरेति साभिप्रायम् । पत्न्यां त्वयि एवमलीकवादिनोऽपि जनान् बिभर्तीति

सीता—हा अम्ब ईदिसी अहं तुए दिट्ठा । (क)

पृथिवी—एहि वत्से एहि पुत्रि ।

( इति सीतामालिङ्ग्य मूर्च्छति । )

लक्ष्मणः—( सहर्षम् ) दिष्ट्या गङ्गापृथिवीभ्यामभ्युपपन्नार्या ।

रामः—( अवलोक्य । ) करुणतरं खल्वेतद्वर्तते ।

भागीरथी—विश्वंभरापि नाम व्यथत इति जितमपत्यस्नेहेन । यद्वा सर्वसाधारणो ह्येष मनसो मोहग्रन्थिरन्तश्चरश्चेतनावतामनुपप्लवः संसारतन्तुः । देवि भूतधात्रि वत्से वैदेहि समाश्वसिहि समाश्वसिहि ।

पृथिवी—देवि सीतां प्रसूय कथमाश्वसिमि ।

सोढश्चिरं राक्षसमध्यवास-
स्त्यागो द्वितीयश्च सुदुःसहोऽस्याः ।

---

( क ) हा अम्ब ईदृश्यहं त्वया दृष्टा ।

---

क्षमातिशयव्यञ्जनात् ॥ ईदृशी एवमलीकपौरवादेन त्यक्ता विपद्यमाना सती दृष्टा ॥ उभौ सीतापृथिव्यौ ॥ अभ्युपपन्ना अनुगृहीता ॥ एतन्मातापुत्र्योरालिङ्ग्य मूर्च्छारूपं करुणान्तरं मद्दुःखातिरिक्तदुःखम् ॥ अत्रभवती पूज्या विश्वंभरा क्षमाप्रधाना भूमिः व्यथत इति दुःख्यत इति हेतोरपत्यस्नेहेन जितमभिभवः कृतः । अपत्यस्नेहो बलवान्धीरानप्यभिभवतीत्यर्थः । यद्वेति पूर्वकल्पातिरिक्तकल्पद्योतकम् । मनसः हृदयस्य मूढग्रन्थिः मोहात्मको विभागाभावप्रयोजकसंपर्कजनकः । चेतनावतां प्रेक्षावतामान्तरः उपप्लवः अभ्यंतर उपद्रवः संसारतन्तुः संसारसंधायक एषः अपत्यस्नेहः सर्वधारणः । न केवलं विश्वंभरायाः किंतु सर्वेषां समानः । दधातीति धात्री पोषयित्री । यद्वा दधत्येनामिति धात्री । प्राणिनां वर्धयित्रीत्यर्थः । इदं च संबोधनं पृथ्वीं प्रति अभिप्रायगर्भम् ॥ सीतां प्रसूय कथमाश्वसिमि कथं केन प्रकारेणाश्वसिमि क्षीणदुःखा भवामि । मत्सुता संपन्नप्रजेति वा स्वाधीनपतिकेति वा केन हेतुना क्षीणदुःखा भवामीत्यर्थः । **सोढ इति** । राक्षसमध्यवासः चिरं सोढः । भूयांसं कालमनुभूत इत्यर्थः । सुदुःसहः इति । अस्याः द्वितीयस्त्यागस्तु अलौकिजनवादप्रयुक्तत्यागस्तु सुदुःसहः पूर्ववत्सहनानर्हः इत्यर्थः । इदमनन्तं पृथ्वीवाक्यमनन्तरं गङ्गावाक्यम् ॥

**भागी०—**

> **को नाम पाकाभिमुखस्य जन्तो-**
> **र्द्वाराणि दैवस्य पिधातुमीष्टे ॥ ४ ॥**

**पृथिवी**—भगवति भागीरथी सद्देशमुक्तम् । युक्तमेतद्वा रामभद्रस्य ।

> **न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।**
> **नाहं न जनको नाग्निर्नानुवृत्तिर्न संततिः ॥ ५ ॥**

**सीता**—हा अज्जउत्त सुमराविदह्मि । ( क )

**पृथिवी**—आः कस्तवार्यपुत्रः ।

**सीता**—( सलज्जास्रम् । ) जहा वा अम्बा भणादि । (ख)

**रामः**—अम्ब पृथिवि ईदृशोऽस्मि ।

**भागी०**—भगवति वसुंधरे शरीरमसि संसारस्य । तत्किमसंविदानेव जामात्रे कुप्यसि ।

---

( क ) हा आर्यपुत्र स्मारितास्मि ।
( ख ) यथा वाऽम्बा भणति ।

---

**गङ्गेति** । आहेति शेषः । को नाम जन्तुः प्राणी पाकाभिमुखस्य फलोपधानप्रवृत्तस्य दैवस्य सुकृतदुष्कृतात्मकभाग्यस्य द्वाराणि अनुभवमार्गान् पिधातुं रोद्धुमीष्टे समर्थो भवति ॥ ४ ॥ वः रामभद्रस्य युष्मद्वंश्यस्य रामभद्रस्य । अनेन स्वसंबन्धः परिहृत इति ध्वनितम् । एतद्वक्ष्यमाणम् । युक्तं संगतम् । **न प्रमाणीकृत इति** । बाल्ये बलभावे । बालेन स्वेनेति शेषः । पीडितः उद्वाहकर्मणि गृहीतः पाणिः न प्रमाणीकृतः युक्तायुक्तविचारे निर्णयहेतुर्न कृतः। गृहीत इत्यनुक्त्वा पीडित इत्युक्तेरयं भावः । सामुद्रिकतन्त्रवेत्ता स्वयं रामो मत्सुतापाणिस्थसाध्वीत्वनिश्चायकं रेखाविशेषं दृष्ट्वा निर्दोषेयं चिरानुभवार्हेति सूचनाय दृढं पाणिं गृह्णन्नद्य तद्विसस्मारेति । अन्यथा पाणिग्रहणस्य दोषवत्त्यास्त्यागाप्रतिबन्धकत्वादिति मन्तव्यम् । प्रमाणीकृत इत्येतदुत्तरत्र यथालिङ्गं विपरिणमयितव्यम् । वृत्तिः शीलम् । संततिर्वंशः ॥ ५ ॥ यथाम्बा भणति अत्र तथैवेति शेषः ॥ ईदृशोऽस्मि अनार्यपुत्रोऽस्मि ॥ संसारस्य दम्पतिमातृपुत्रस्वसृदौहित्रादिकुटुम्बसंबन्धस्य शरीरमसि शरीरवत्प्रवृत्तिनिवृत्तिनिबन्धनभ-

लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ।
इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः
कृत्स्नो लोकस्तदिह विषमे किं स वत्सः करोतु ॥ ६॥

**लक्ष्मणः**—अव्याहतान्तःप्रकाशा हि देवताः सत्त्वेषु ।

**गङ्गा**—तथाप्येष तेऽञ्जलिः ।

**रामः**—अम्ब अनुवृत्तस्त्वया भगीरथकुले[3] प्रसादः ।

**पृथिवी**—देवि नित्यं प्रसन्नास्मि वः । किं त्वापातदुःसहस्नेहसंवेगेनैवं ब्रवीमि । न पुनर्न जानामि सीतास्नेहं रामभद्रस्य ।

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः ।
लोकोत्तरेण सत्त्वेन प्रजापुण्यैश्च जीवति ॥ ७ ॥

**रामः**—सकरुणा हि गुरवो गर्भरूपेषु ।

---

वती भवसि । 'क्रुधद्रुह–' इति चतुर्थी । **घोरमिति** । अयशः दोषवत्ताप्रथा। लङ्का चासौ द्वीपश्च लङ्काद्वीपस्तस्मिन् । द्विर्गता आपो यस्मिन्स द्वीपः।'द्व्यंत' इति अकारस्य ईकारः । लङ्काद्वीपे या वह्नौ विशुद्धिस्तामिह जनः कथं श्रद्दधातु प्रत्येतु । कृत्स्नो लोकः समाराधनीय इति यदिदमिक्ष्वाकूणां कुलधनं कुलक्रमागतं धनम् । तत्तस्मादिह विषमे एतस्मिन्धर्मसंकटे स वत्सः रामः किं करोतु— ॥ ६ ॥ अव्याहतः अकुण्ठितः अन्तःप्रकाशः परोक्षज्ञानरूपः यासां तथोक्ताः। सत्त्वेषु पदार्थेषु । पृथिव्यपि जानात्येवेति भावः ॥ तथापि एवं सत्यपि एषोऽञ्जलिस्ते । 'अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी' इति प्रसादन इत्यर्थः ॥ अम्ब भागीरथीति संबुद्धिः । अनुवृत्तः भगीरथप्रभृतिमत्पर्यन्तं संवर्धित इत्यर्थः ॥ तव नित्यं प्रसन्नास्मि नित्यं त्वदीयविषयकमनःकालुष्यरहितास्मि । किमर्थोऽञ्जलिरित्यर्थः । किंत्वेवं प्रसन्नत्वेऽपि स्नेहस्य संवेगस्त्वरा । आपाते श्रवणोत्तरक्षणे दुःसहः सोढुमशक्यः । 'दर्शनक्षण आपातस्तथैवाकर्णनक्षणे' इति कोशः । स्नेहेन पुत्रीविषयप्रेम्णा संवेगस्तरलत्वं भयं वा । 'ओविजी भयचलनयोः' इत्यस्माद्भावे घञ्प्रत्ययश्च । 'क्तोः' इति कुत्वं च । रामभद्रस्य सीताविषयकं स्नेहं पुनः प्रेम तु न जानामीति न जानाम्येव । **दह्यमानेनेति** । दह्यमानेन भस्मीक्रियमाणेन मनसा करणेन दैवाद्धेतोः वत्सां सीतां विहाय त्यक्त्वा लोकोत्तरेण सत्त्वेन धैर्येण प्रजानां पुण्यैः सुकृतैश्च जीवति प्राणं धारयति ॥ ७ । गर्भणामिव रूपं येषां तथोक्तेषु । अस्मास्विति शेषः । गर्भस्य,

अम्बा। (क)

राम:—किमन्यद्ब्रवीतु।

भागी०—शान्तम्। अविलीना संवत्सरसहस्राणि भूयाः।

पृथिवी—वत्से अवेक्षणीयौ ते पुत्रकौ।

सीता—अणाध ह्मि किं एदेहिं। (ख)

राम:—हृदय वज्रमयमसि।

भागी०—कथं त्वं सनाथाप्यनाथा।

सीता—कीदिसं मम अभागाए सणाहत्तणम् (ग)

देव्यौ—

जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे।
आवयोरपि यत्सङ्गात्पवित्रत्वं प्रकृष्यते ॥ ८ ॥

लक्ष्मण:—आर्य श्रयताम्।

राम:—शृणोतु लोकः।

(नेपथ्ये कलकलः।

राम:—अद्भुततरं किमपि।

---

(क) नयतु मामात्मनोऽङ्गेषु विलयमम्बा।

(ख) अनाथास्मि किमेताभ्याम्।

(ग) कीदृशं मे अभाग्यायाः सनाथत्वम्।

---

यथा स्वरक्षणीयानर्हत्वं मन्त्ररक्षणीयत्वं तद्वद्गुरूणां वयमित्यर्थः॥ विलयमदर्शनम्॥ किं ब्रवीषि। किमिति क्षेपे। संवत्सरसहस्राणि। सहस्रशब्दोऽनन्तवाची। अत्यन्तसंयोगे द्वितीया॥ अवेक्षणीयौ कटाक्षणीयौ। तदर्थं स्थातव्यमिति भावः॥ अभाग्यायाः पुण्यरहितायाः सनाथत्वं नाथवत्त्वम्॥ **जगन्मङ्गलमिति।** जगन्मङ्गलं जगतां मङ्गलं यस्मादिति बहुव्रीहिः। अनेन मङ्गलदेवतेति समाख्या स्मारिता। अवमन्यसे परिभवसि। यस्य त्वदात्मनः सङ्गात्संपर्कादावयोरपि जगत्पवित्रत्वेन प्रसिद्धयोरपि पवित्रत्वं स्वसंबन्धादन्येषामपि दोषापनोदकत्वं प्रकृष्यते पूर्वापेक्षया अतिशयितं भवति। कर्मकर्तरि। तङ्॥ ॥ ८ ॥ लोकः शृणोतु। मम हि सीतायाः शुद्धता व्यक्ता कौलीनवादिजन एव शृणोत्वित्यर्थः॥ **नेपथ्ये इति।** जृम्भकास्त्राणां प्रयोगायोग्यत्वेन तदाग-

**सीता**—किं त्ति अन्तरिक्खं पज्जलदि। (क)

**देव्यौ**—ज्ञातम्।

> **कृशाश्वः कौशिको राम इति येषां गुरुक्रमः।**
> **प्रादुर्भवन्ति तान्येव शस्त्राणि सह जृम्भकैः॥ ९॥**

(नेपथ्ये।)

> **देवि सीते नमस्तेऽस्तु गतिर्नः पुत्रकौ हि ते।**
> **आलेख्यदर्शने देवो यदाह रघुनन्दनः॥ १०॥**

**सीता**—दिट्ठिआ अत्थदेवदाओ एदाओ। हा अज्जउत्त अज्जावि दे पसादा पडिप्फुरन्दि। (ख)

**लक्ष्मणः**—उक्तमासीदार्येण सर्वथैतानि त्वत्प्रसूतिमुपस्थास्यन्तीति।

**देव्यौ**—

> **नमो वः परमास्त्रेभ्यो धन्याः स्मो वः परिग्रहात्।**
> **काले ध्यातैरुपस्थेयं वत्सयोर्भद्रमस्तु वः॥ ११॥**

**रामः**—

> **क्षुभिताः कामपि दशां कुर्वन्ति मम सांप्रतम्।**
> **विस्मयानन्दसंदर्भजर्जराः करुणोर्मयः॥ १२॥**

(क) किमित्यन्तरिक्षं प्रज्वलति।

---

(ख) दिष्ट्या अस्त्रदेवता एताः। हा आर्यपुत्र अद्यापि ते प्रसादाः परिस्फुरन्ति।

---

मनसूचनार्थं नेपथ्ये इत्युक्तम्॥ प्रज्वलितं प्रकाशवत्॥ **कृशाश्व इति**। गुरुक्रमः आचार्यानुपूर्वी। जृम्भकैः सह शस्त्राणि वारुणादीनि प्रादुर्भवन्ति प्रकटीभवन्ति॥ ९॥ **देवीति**। पुत्रकौ नो गतिः अस्माकं प्राप्यौ। आलेख्यदर्शनात्प्रथमाङ्कोक्तचित्रदर्शनात्॥ १०॥ **दिष्ट्येति**। एताः अस्त्रदेवताः। आनन्दहेतव इत्यर्थः। अद्याप्येवं दोषवादप्रयुक्तपरित्यागकालेऽपि ते प्रसादाः त्वदनुग्रहाः परिस्फुरन्ति प्रकाशन्ते॥ उक्तमासीत्। प्रथमाङ्क इति शेषः॥ **नम इति**। वः परिग्रहाद्युष्मत्कर्तृकस्वीकारात् धन्याः स्मः क्षेमलाभयुक्ता भवामः। काले युद्धादिसमये ध्यातैरागन्तव्यमिति चिन्तितैः। काले युद्धादिसमये वत्सयोरुपस्थेयं संनिधातव्यम्। युष्माभिरिति शेषः॥ ११॥ **क्षुभिता**

दृष्ट्वा—मोदस्व वत्से मोदस्व । रामभद्रपुत्रौ ते पुत्रकाविदानीं संवृत्तौ ॥

**सीता**—भअवदीओ को एदाणं खत्तिओचिदं कम्म करिस्सदि । ( क )

**रामः**—

> **एषा वसिष्ठशिष्याणां रघूणां वंशनन्दिनी ।**
> **कष्टं सीतापि सुतयोः संस्कर्तारं न विन्दति ॥ १३ ॥**

**भागी०**—पुत्रि किं तवानया चिन्तया । एतौ हि वत्सौ स्तन्यत्यागात्परेण भगवतो वाल्मीकेरर्पयिष्यामि । स एतयोः क्षत्रकृत्यं करिष्यति ।

> **यथा वसिष्ठाङ्गिरसावृषिः प्राचेतसस्तथा ।**
> **जनकानां रघूणां च वंशयोरुभयोर्गुरुः ॥ १४ ॥**

**रामः**—सुविचिन्तितं भगवत्या ।

---

( **क** ) भगवत्यौ क एतयोः क्षत्रियोचितं कर्म करिष्यति ।

---

कारविशेषः । स चात्र गङ्गापतनतत्रत्यप्रसवजृम्भकप्राप्त्यादिमूलकः । आनन्दः स्वसंबन्धसंभावनार्हताप्रयुक्तप्रीतिविशेषः । ताभ्यां जर्जराः व्याकुलिताः । करुणस्य सीतावियोगजन्यदुःखातिशयस्य ऊर्मयः तरङ्गाः मम कामपि दशामनिर्वाच्यामवस्थां कुर्वन्त्युत्पादयन्ति । ऊर्मिपदेन करुणस्य समुद्रत्वं व्यज्यते ॥ ॥ १२ ॥ मोदस्व मोदं प्राप्नुहि । इदानीं जृम्भकास्त्रलाभे । संवृत्तौ संजातौ ॥ क्षत्रियोचितं क्षत्रियजात्यनुरूपं विधिमुपनयनसंस्कारादिशास्त्रार्थं कः कारयिष्यति ॥ **एषेति** । वसिष्ठशिष्याणां रघूणां वंशनन्दिनी संततेरानन्दहेतुः एषा सीतापि सुतयोः संस्कर्तारमुपनयनादिसंस्कारकाचार्यं न विन्दति न लभते । कष्टम् । दुःखमेतत् इत्यर्थः ॥ १३ ॥ भद्रे मङ्गलवति । एतौ वत्सौ । द्वितीयान्तम् । स्तन्यत्यागात्परेण स्तन्यत्यागकालान्तरकाले । अर्पयिष्यामि विद्यादिप्रदानार्थमिति शेषः । एतेन द्वितीयाङ्कविष्कम्भस्थं केनापि देवताविशेषेणेति वाक्यं व्याख्यातम् । [ **वसिष्ठ इति** । ब्रह्म च क्षत्रं च ब्रह्मक्षत्रे । तयोरुचितं कृत्यं ब्राह्मणत्वजात्यनुगुणं त्रय्यध्यापनं क्षत्रियत्वोचितधनुर्वेदाध्यापनं च करिष्यति । ] **यथेति** । जनकानां रघूणां च उभयवंशयोः यथा वसिष्ठाङ्गिरसौ वसिष्ठशतानन्दौ गुरू तथा प्राचेतसः ऋषिर्गुरुः । इदं गंगावचनम् ॥ १४ ॥

वुत्प्रेक्षे ।

एतौ हि जन्मसिद्धास्त्रौ प्राप्तप्राचेतसावुभौ ।
आर्यतुल्याकृती वीरौ वयसा द्वादशाब्दिकौ ॥ १५ ॥

**रामः**—वत्स इत्येवाहं परिप्लवमानहृदयः प्रमुग्धोऽस्मि ।

**पृथिवी**—एहि वत्से पवित्रीकुरु रसातलम् ।

**रामः**—हा प्रिये लोकान्तरं गतासि ।

**सीता**—णेदु मं अत्तणो अङ्गेसु विलअं अम्बा । ण सक्कम्हि ईदिसं जीअलोअपरिवत्तं अणुभविदुम् । (क)

**रामः**—किमुत्तरं स्यात् ।

**पृथिवी**—मन्नियोगतः स्तन्यत्यागं यावत्पुत्रयोरवेक्षस्व । परेण तु यथा ते रोचिष्यते ।

**गङ्गा**—एवं तावत् ।

(इति निष्क्रान्ते देव्यौ सीता च ।)

**रामः**—कथं विलय एव वैदेह्याः संपन्नः । हा देवि दण्डकारण्यवासप्रियसखि हा चारित्रदेवते लोकान्तरं पर्यवस्थितासि ।

(क) नयतु मामात्मनोऽङ्गेषु विलयमम्बा । न शक्तास्मीदृशं जीवलोकपरिवर्तमनुभावितुम् ।

तैस्तैरुपायैः बहुभिः हेतुभिः वत्सौ कुशलवौ उत्प्रेक्षे वत्सकुशलत्वेन अभिनेयशिशुद्वयं संभावयामि । हेतनाह–**एतौ हीत्यादिना** । तन्त्रेणायं श्लोकः चतुष्टयपरः अभिनेयशिश्वोः कुशलवयोश्च जन्मसिद्धास्त्रत्वादिकं समानं योज्यम् । वयसा जीवनकालेन हेतुना । द्वादशाब्दकौ द्वादशसंख्याकसंवत्सरयुक्तौ । अभिनेयशिश्वोरप्यभिनयकालापेक्षया द्वादशाब्दकत्वं बोध्यम् ॥१५॥ **वत्सावितेि** । परिप्लवमानहृदयस्तरलहृदयः । प्रमुग्धोऽस्मि प्रमूढोऽस्मि ॥ रसातलमधोभुवनम् ॥ लोकान्तरमन्यं लोकम् ॥ विलयं तिरोहितत्वम् । जीवलोकस्य परिभवं जीवलोककर्तृकतिरस्कारम् ॥ उत्तरं पृथिव्याः प्रतिवचनं किं स्यात् । उत्तरमनन्तरभावि वा ॥ मन्नियोगतः मदादेशेन स्तन्यत्यागं यावत्स्तन्यत्यागमभिव्याप्य पुत्रयोरवेक्षस्व पुत्रौ पश्येत्यर्थः । परेण तु परस्तात्तु यथा रोचिष्यते येन प्रकारेण रुचिर्भविष्यति ते तथाहं करिष्यामीत्यर्थः ॥ एवं तावदेवमेव । देव्यौ गङ्गापृथिव्यौ । निष्क्रान्ते रङ्गस्थानादिति शेषः ॥ लोकान्तरे पर्यवसि-

( इति मूर्छति । )

लक्ष्मणः—भगवन्वाल्मीके परित्रायस्व परित्रायस्व । एष ते काव्यार्थः ।

( नेपथ्ये । )

अपनीयतामातोद्यम् । भो भो सजङ्गमस्थावराः प्राणभृतो मर्त्यामर्त्याः पश्यतेदानीं महर्षिणा भगवता वाल्मीकिनाऽभ्यनुज्ञातं पवित्रमाश्चर्यम् ।

लक्ष्मणः—( विलोक्य । )

मन्थादिव क्षुभ्यति गाङ्गमम्भो
व्याप्तं च देवर्षिभिरन्तरिक्षम् ।
आश्चर्यमार्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुदेति ॥ १६ ॥

( पुनर्नेपथ्ये । )

अरुन्धति जगद्वन्द्ये गङ्गापृथ्व्यौ जुषस्व नौ ।
अर्पितेयं तवावाभ्यां सीता पुण्यव्रता वधूः ॥ १७ ॥

लक्ष्मणः—अहो आश्चर्यमाश्चर्यम् । आर्य पश्य पश्य । ( विलोक्य ) कष्टमद्यापि नोच्छ्वसित्यार्यः ।

---

तासि । पर्यवसानं विश्रांतिः । लोकान्तरमेव गतासीति प्रतिपन्नं निश्चितम् । स्तन्यत्यागात्परत्र रसातलगमनस्य पृथिव्याभ्यनुज्ञातत्वात् द्वादशानां वत्सरणामतीतत्वाच्च लोकान्तरं गतासीत्येतावन्निश्चितमिति भावः॥ एष ते काव्यार्थः । पर्याप्तं दृष्ट इति शेषः । इतः परं निवर्तितव्यमिति हृदयम् ॥ आतोद्यं नृत्तगीतसमुदायः।अपनीयतां निवर्त्यताम् । मर्त्यामर्त्या देवमनुष्यात्मका जङ्गमस्थावरात्मकाश्च प्राणभृतः । वृक्षादीनामपि प्राणवत्त्वात्स्थावरोक्तिरविरुद्धा । वाल्मीकिनाऽभ्यनुज्ञातं करुणाद्भुतरसमित्यत्राद्भुतपदेन प्रकाश्यत्वेन बोधितं पवित्रं निर्दोषमाश्चर्यं पश्यत ॥ **मन्थादिवेति** । गाङ्गमम्भः मन्थादिव मन्थनादिव क्षुभ्यति क्षोभं प्राप्नोति । अन्तरिक्षं देवैः ऋषिभिश्च व्याप्तम् । कौतुकादिति भावः । आर्या सीता देवताभ्यां गङ्गामहीभ्यां सह सलिलादुपैति प्राप्नोति॥ १६॥ **नेपथ्ये इति । अरुन्धतीति** । नौ द्वितीयाद्विवचनम् । गङ्गापृथ्व्यौ जुषस्व जानीहि नौ । जुषस्व प्रियस्व । तव वधूः स्नुषा इयं सीता आवाभ्यां तवार्पि-

( ततः प्रविशत्यरुन्धती सीता च । )

**अरुन्धती—**

त्वरस्व वत्से वैदेहि मुञ्च शालीनशीलताम् ।
एहि जीवय मे वत्सं प्रियस्पर्शेन पाणिना ॥ १९ ॥

**सीता—**( ससंभ्रमं स्पृशन्ती ) समस्ससदु समस्ससदु अज्जउत्तो । ( क )

**रामः—**( समाश्वस्य सानन्दम् ) भोः । किमेतत् । ( दृष्ट्वा सहर्षाद्भुतम् । ) कथं देवी[3] । ( सलज्जम् । ) अये अम्बा मे अरुन्धती सर्वे च प्रहृष्यन्त ऋष्यशृङ्गशान्तादयोऽस्मद्गुरवः ।

**अरुन्धती—**वत्स एषा भगवती भगीरथगृहदेवता सुप्रसन्ना गङ्गा ।

( नेपथ्ये । )

जगत्पते रामचन्द्र स्मर्यतामालेख्यदर्शने मां प्रत्यात्मनो वचनं यथा सा त्वमम्ब स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भवेति । तत्रानृणास्मि जाता ।

**अरुन्धती—**इयं ते श्वश्रूर्भगवती वसुंधरा ।

( पुनर्नेपथ्ये )

उक्तमासीदायुष्मता वत्सायाः परित्यागे यथा भगवति वसुंधरे श्लाघ्यां दुहितरमवेक्षस्व जानकीमिति । तदधुना कृतवचनास्मि प्रभोर्वत्सस्येति ।

---

( क ) समाश्वसितु समाश्वसित्वार्यपुत्रः ।

---

प्राप्नोति ॥ **त्वरस्वेति** । शालीनशीलतामधृष्टस्वभावत्वं मुञ्च त्यज । सौम्यस्पर्शेन चन्द्रवच्छीतलेन पाणिना मे वत्सं जीवय सप्राणं कुरु ॥ १९ ॥ एतत्सीतास्पर्शरूपं किं किंहेतुकम् । कथं देवी जानकी । विस्मयद्योतकः कथंशब्दः । लज्जा मनःसंकोचः । स चेहारुन्धतीदर्शनात् ॥ भागीरथी भगीरथानीता रघुकुलदेवता देवी दीप्तिशालिनी । सुप्रसन्ना अनुग्रहं कृतवती ॥ आलेख्यदर्शने चित्रदर्शने । आत्मवचनं त्वद्वचनम् । अनृणास्मि निर्यातितऋणास्मि । ऋणं ह्यवश्यप्रतिविधेयमिति सादृश्यादेवमुक्तम् ॥ आयुष्मता । त्वयेति शेषः । वसुंधरायै वसुंधरां बोधयितुमुक्तमासीदिति वचनं जातम् । श्लाघ्यां दुहितरमवेक्षस्व जानकीमितीदं वस्तु उक्तमासीदिति कर्माणि को वा ज्ञेयः । कृतवचनास्मि ।

नामि वः ।

**अरुन्धती**—भो भोः पौरजानपदाः इयमधुना भगवतीभ्यां वसुंधराजाह्नवीभ्यामेवं प्रशस्यमाना ममारुन्धत्याः समर्पिता पूर्वं च भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा सब्रह्मकैश्च देवैः संस्तुता सावित्रकुलवधूर्देवयजनसंभवा सीतादेवी परिगृह्यतामिति कथमिह भवन्तो मन्यन्ते ।

**लक्ष्मणः**—आर्ये एवमार्ययारुन्धत्या निर्भर्त्सिताः पौरजानपदाः कृत्स्नश्च भूतग्राम आर्यां नमस्कुर्वन्ति । लोकपालाः सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते ।

**अरुन्धती**—जगत्पते रामचन्द्र

**नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम् ।**
**हिरण्मय्याः प्रतिकृतेः पुण्यां प्रकृतिमध्वरे ॥ २० ॥**

**सीता**—( स्वगतम् । ) जाणादि अज्जउत्तो सीदाए दुक्खं पडिमज्जिदुम् । ( क )

---

(क) जानात्यार्यपुत्रः सीताया दुःखं परिमार्ष्टुम् ।

---

अनुकम्पयितव्य इति दयाविषयः कर्तव्य इति प्रणमति प्रकर्षेण नमस्यति ॥ पौराः पुरवासिनः । जानपदाः देशवासिनः । एवं प्रशस्यमाना 'आवयोरपि यत्सङ्गात्पवित्रत्वं प्रकृष्यते' इत्याभिष्टुता । पूर्वं रावणवधानन्तरकाले । वैश्वानरेणाग्निना । निर्णीतपुण्यचारित्रा निश्चितपातिव्रत्या । परिगृह्यतां राज्ञीत्वेन स्वीक्रियताम् । इहास्मिन्नर्थे कथं मन्यन्ते किं वो मतमिति भावः ॥ भूतग्रामः गोबलीवर्दन्यायेन पौरजानपदातिरिक्ताः ग्राह्याः । आर्यां सीतां नमस्कुर्वन्ति । लोकपालाः इन्द्रादयः । सप्तर्षय अत्र्यादयः । पुष्पवृष्टिभिः करणैरुपतिष्ठन्ते पूजयन्ति । आर्यामित्यनुषङ्गः ॥ **नियोजयेति** । प्रियां त्वद्विषयकप्रीतियुक्ताम् । धर्मचारिणीं धर्मानुष्ठानशीलाम् । अध्वरे यागे । हिरण्मय्याः प्रतिकृतेः प्रतिमायाः प्रकृतिं पावनीं प्रकृतिं प्रतिमां सीतां यथाधर्मं नियोजयाज्ञापय । पुण्यामित्यनेन 'यस्य भार्या विदूरस्था पतिता दूषिताथवा । अनिच्छुः प्रतिकूला वा' इत्याद्युदासः ॥ २० ॥ यथा भगवत्यादिशति । तथास्त्विति शेषः ॥ कृतार्थोऽस्मि

**लक्ष्मणः**—आर्ये एष निर्लज्जो लक्ष्मणः प्रणमति ।

**सीता**—वच्छ ईदिसो तुमं चिरं जीअ ( **ख** )

**अरुन्धती**—भगवन्वाल्मीके उपनीयेतामिमौ सीतागर्भसंभवौ रामभद्रस्य पुत्रकौ कुशलवौ । ( इति निष्क्रान्ता । )

**रामलक्ष्मणौ**—दिष्ट्या तथैवैतत् ।

**सीता**—( सबाष्पाकुला ) कहिं ते पुत्तआ मे ( **ग** )

( ततः प्रविशति वाल्मीकिः कुशलवौ च । )

**वाल्मीकिः**— वत्सौ कुशलवौ एष वां रघुपतिः पिता एष लक्ष्मणः कनिष्ठतातः । एषा सीता जननी । एष राजर्षिर्जनको मातामहः ।

**सीता**—( सहर्षकरुणाद्भुतं विलोक्य । ) कहं तादो । ( **घ** )

**कुशलवौ**—हा तात हा अम्ब हा मातामह ।

**रामलक्ष्मणौ**—( सहर्षमालिङ्ग्य । ) ननु वत्सौ पुण्यैः प्राप्तौ स्थः ।

---

( **क** ) प्रत्युज्जीवितास्मि ।

( **ख** ) वत्स ईदृशस्त्वं चिरं जीव ।

( **ग** ) कुत्र तौ पुत्रकौ मम । .

( **घ** ) कथं तातः ।

---

सीतारामयोः समागमरूपप्रयोजनसिद्धिमानस्मि । त्यागस्य स्वद्वारकत्वादेवमुक्तम् ॥ प्रत्युज्जीवितास्मि 'यस्त्वया सह स स्वर्गः' इत्युक्तरामसमागमात्मकपुनरुज्जीवनवती कृतास्मि ॥ ईदृशः सन् चिरं जीव मम पत्युश्च समागमं परमं श्रेयो मन्वानः सन् चिरं जीव ॥ रामभद्रस्य उपनय रामभद्रसमीपं प्रापय ॥[1] दिष्ट्या तथैवैतत् । एतत्कुशलवोत्पत्त्यादिकं तथैव पूर्वमस्मच्चिन्तितप्रकारेणैव । आसीदिति शेषः ॥ क्व तौ पुत्रौ । इदं वाल्मीकिप्रवेशसूचकम् ॥ मातामहः मातुः पिता । मातृपितृभ्यां पितरि डामहच् ॥ कथं जातौ कुशलवौ । जातौ कथमिति चित्तविकासे ॥ **हा तातेत्यादि** । सर्वत्र हाशब्दो हर्षद्योतकः ॥ ननु वत्सौ युवां प्राप्तौ स्थः । ननु वत्साविति संबोधनम् ॥ चिरस्य परिष्वजेथां

---

१ वि. २ उपनयेदानीं. ३ युवाम्.

सीता—भअव एसा हं पणमामि । ( ख )

वाल्मीकिः—वत्से ईदृश्येव चिरं भूयाः ।

सीता—अम्महे तादो कुलगुरू अज्जाअणो सभत्तुआ अज्जा सन्तादेई सलक्खणा सुप्पसण्णा अज्जउत्तचलणा समं कुशलवा वि दीसन्ति ता णिब्भरह्मि आणन्देण । ( ग )

( नेपथ्ये कलकलः ।)

वाल्मीकिः—( उत्थायावलोक्य च । ) उत्खातलवणो मधुरेश्वरः प्राप्तः ।

लक्ष्मणः—सानुषङ्गाणि कल्याणानि ।

रामः—सर्वमिदमनुभवन्नपि न प्रत्येमि । यद्वा प्रकृतिरियमभ्युदयानाम् ।

वाल्मीकिः—रामभद्र उच्यतां किं ते भूयः प्रियमुपकरोमि[2] ।

रामः— अतः परमपि प्रियमस्ति । [3]तथापीदमस्तु—

( क ) एहि जात कुश एहि जात लव चिरस्य मां परिष्वजेथां पुनर्जन्मान्तरगतां जननीम् ।

( ख ) भगवन् एषाहं प्रणमामि । ,

( ग ) अम्हे तातः कुलगुरुरार्याजनः सभर्तृकार्या शान्तादेवी सलक्ष्मणाः सुप्रसन्ना आर्यपुत्रचरणाः समं कुशलवावपि दृश्यन्ते तन्निर्भरास्म्यानन्देन ।

बहुकालमालिङ्गनम् । न तु यत्किंचित्क्षणालिङ्गनेन तृप्तिरिति भावः । परिष्वजेथामिति लोट्मध्यमद्विवचनम् ॥ लोकान्तराद्रसातलात् ॥ तथा कृत्वा आलिङ्ग्य । धन्यौ स्वः प्रशस्तौ भवावः । एवमेव चिरं भूयाः एवमेव पत्यपत्याभ्यां संगतैव भूयाः ॥ नेपथ्ये । उत्खातः उन्मूलितः लवणः लवणनामकासुरो येन तथोक्तः । मधुरायाः तन्नाम्न्या नगर्या ईश्वरः स्वामी । शत्रुघ्न इत्यर्थः । अस्यापि प्रथमाङ्कारब्धप्रयोजनत्वान्निर्वहणे निवेशः ॥ कलत्रपुत्रसमागमादिश्रेयांसि सानुषङ्गाणि ॥ अनुषज्यन्ते अनुसंबध्यन्ते यदित्यनुषङ्गं मङ्गलान्तरम् । कर्मणि घञ् । संबन्धमनुवर्तिष्यत इत्याचार्यभगवत्पतञ्जलिप्रयोगेण नपुंसकत्वम् ।

१ लोअन्दराओ आअदं. २ उपहरामि- ३ किंत्विदं भरतवाक्यमस्तु ।

मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च।
तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम् ॥ २१ ॥

---

संपत्संपदमनुबध्नातीति मङ्गलान्तरसहितानीत्यर्थः । शत्रुवधतद्राज्यप्राप्त्योश्च श्रेयस्त्वादनुभवन्नपि साक्षात्कुर्वन्नपि न प्रत्येमि नियतमिति न विश्वसिमि । यद्वेति । न मद्दोष इति भावः । इयमनियतमित्यप्रत्ययः । अभ्युदयानां श्रेयसां प्रकृतिः स्वभावः । विधेयप्राधान्यात्स्त्रीत्वम् ॥ भूयः पुत्रकलत्रसमर्पणात्परमिष्टं किमुपहरामि उपहारीकरोमि । इदमेव सर्वथा ऋषयः श्रेयो विधास्यन्तीति प्रथमाङ्के सूचितम् ॥ अतः परमपि उक्तादन्यदपि । किं त्विदं भरतवाक्यमस्तु । एवं सत्यपि वक्ष्यमाणं भरतवचनमस्तु भवनार्हम् । अर्हे लोट् । पाप्मभ्य इति । इयं च प्रशस्तिः । सा प्रसिद्धा इयं बुद्धिस्था कथा रामायणात्मकवाक्यप्रबन्धरूपा कथा । 'कथ वाक्यप्रबन्धे' इति धातुः । सा च वाल्मीकीयचतुर्विंशतिसहस्रिका । पाप्मभ्यः दुरितेभ्यः जगत्पुनाति विभाजयति । जगत इति षष्ठ्यन्तं विपरिणम्य योजनीयम् । पूङ् धातुः यद्यपि दुरितविभजनात्मकदोषनिर्हरणवाची तथापि पाप्मभ्यः पुनातीति 'सकीचकैर्मारुतपूर्णरन्ध्रैः' इतिवद्व्याख्येयम् । जगतः श्रेयांसि पुत्रमित्रादीनि वर्धयति मोक्षपर्यन्तानि उत्तरोत्तरमधिकानि करोति । अत्र कुटुम्बवृद्धिं धनधान्यवृद्धिं इत्यादिश्लोकद्वयमसुसंधेयम् । मातेव गङ्गेव माङ्गल्या मनोहरा च । माता हि दुःखविस्मारिणी सुखदा च भवति । गङ्गा च पापनाशनी मोक्षदा च भवति । तद्वद्रामायणमपीति भावः । शब्दब्रह्मविदः शब्द एव ब्रह्म परिच्छिन्नत्वापरिच्छिन्नत्वाभ्यां परब्रह्मसाम्यात्तद्रूपणम् । तद्विदन्तीति शब्दब्रह्मविदः । बुधाः सहृदयाः । अभिनयाः सात्त्विकाङ्गिकाहार्यवाचिकभेदेन चतुर्विधाः । अभिनयैरितीत्थंभूतलक्षणे तृतीया । अभिनयविशिष्टो यो विन्यासः रचनावैशिष्ट्यं च प्रतिपादकस्वरूपं विन्यस्तं विन्यासेन निष्पन्नं यस्यास्तथोक्ताम् । शरीरं चेहानुपूर्वी । प्राज्ञस्य सर्वज्ञशिरोमणेः कवेः भवभूतिकवेः इमां वाणीं परिणतामेनामुत्तररामचरितनाटकरूपभवभूतिवागात्मना यः परिणामः तद्वतीमेनां श्रीरामायणात्मककथां परिभावयन्तु परितश्चिन्तयन्तु । 'भू अवकल्कने' । अवकल्कनं चिन्तनमित्युक्तम् । इयं कथा श्रेयांसि वर्धयति एनां परिभावयन्त्वित्यन्वादेशादेनादेशः । वाल्मीकिवागेव भवभूतिवागात्मना परिणतेत्युक्तिः । उत्तररामचरितस्य गाम्भीर्यमाधुर्ये लभ्येते । परिभावयन्त्वित्यनेन 'बद्धा यदर्पणरसेन विमर्दपूर्वम्' इति श्लोकार्थो

( इति निष्क्रान्ताः सर्वे । )

इति सम्मेलनं नाम सप्तमोऽङ्कः ।

**इति महाकविश्रीभवभूतिविरचितं**
**उत्तररामचरितं नाम नाटकं समाप्तम् ।**

---

ध्वनितः । परिपूर्वकस्य 'भू सत्तायाम्' इति पठितस्यैवावज्ञानार्थकत्वमिति नास्य तत्प्रसक्तिः । शब्दब्रह्मविदो बुधाः अभिनयैः सह विन्यस्तरूपां प्राज्ञस्य कवेरिमां वाणीं परिणतामेनां परिभावयन्त्विति योजना । एतेन 'एनाम्' 'इमाम्' इत्यनयोर्न पौनरुक्त्यम् । अभेदसंबन्धेनान्वयवाचकयोरिव प्रकृतिविकृतिवाचकयोरपि समानविभक्तिकत्वनियमादुभयोर्द्वितीयान्तत्वम् । एवं सांगं नाटकं वृत्तम् ॥ २१ ॥

---

यद्यप्यत्राखिलं किंचित्कविनानेन बध्यते ।
निरशङ्कतया तत्तु समाधेयं मनीषिभिः ॥
कोशव्याकरणे नात्र लिखिते ग्रन्थगौरवात् ।
भावस्य तु गभीरत्वात्स कश्चित्कथितो मया ॥
भवभूतेः कवीन्द्रस्य क्व गम्भीरो गिरां भरः ।
क्व मे मतिरतिस्वल्पा सहायोऽत्र हयाननः ॥
अनवतरभावनाभिर्योऽर्थः क्लेशान्मया लब्धः ।
तस्य प्रकाशनीयं व्याख्या विदधातु कौतुकं सुधियाम् ॥

**इति श्रीवाधूलवीरराघवविरचितायां भवभूतिभवतलस्पर्शिनीसमाख्यायामुत्तररामचरितव्याख्यायां**
**सप्तमोऽङ्कः ।**

---

**समाप्तमिदं नाटकम् ।**

---

I. 11, 44; II. 3; IV. 8; VI. 27; VII. 4, 16.

उपजाति—A mixture of इन्द्रवज्रा and उपेन्द्रवज्रा ( उपेन्द्रवज्रा जतस्ततो गौ. G. ज त ज ग ग ).

I. 15; II. 6; III. 35, 42; IV. 16; VI. 15.

रथोद्धता—रान्नराविह रथोद्धता लगौ G. र न र, ल ग.

I. 34, 37, 45.

शालिनी—मात्तौ गा चेच्छालि नीभोगिलोकैः ( 4, 7. ) G. म त त, ग. ग.

I. 42; III. 2; IV. 18; V. 31, 33.

औपच्छंदसिक—V. 8.

द्रुतविलंबित—द्रुताविलंबितमाह नभौ भरौ. G. न भ भर.

III. 27; IV. 15.

वंशस्थ—वदन्ति वंशस्थविलं जतौ जरौ G. ज त ज र. VI. 25.

पुष्पिताग्रा—अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा। Odd quarter न न र य, Even quarter न ज ज र, ग.

III. 18, 20; IV. 4; VI. 8.

प्रहर्षिणी—म्याशाभिर्मनजरगाः प्रहर्षिणीयम् ( 3. 10 ) G. म न ज र, ग.

I. 30, 31, 40, 49; III. 6, 15, 36, 38; IV. 26; V. 12; VI. 9, 22; VII. 6.

मञ्जुभाषिणी—सजसा जगौ च यदि मञ्जुभाषिणी. G. स ज स ज, ग.

I. 18; III. 4; VI. 4, 17, 41.

वसंततिलका—उक्ता वसंततिलका तभजा जगौ गः, G. त भ ज ज, ग. ग.

I. 7, 9, 14, 25, 36; II. 10, 11, 22, 23; III. 8, 11, 12, 21. 26, 28, 47; IV. 6, 23, 29; V. 10, 11, 24, 34; VI. 7, 16, 19.

मालिनी—ननमयययुतेयं मालिनी भोगिलोकैः ( 8. 7. ). G. न न म य य.

I. 24, 26, 27; II. 20, 21; III. 5, 19, 23, 25, 48; V. 2, 3, 13; VI. 12, 24, 26.

पृथ्वी—जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः (8. 9). G. ज स ज स य, ल.ग.

V. 5; VI. 1, 37.

मन्दाक्रान्ता—मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरूचेत् ( 4, 6, 7 ), G. म भ न त त, ग. ग.

I. 33; II. 13, 14, 25; III. 6, 15, 36, 38, IV. 26; V. 12;

I. 28, 29, 35, 38; II. 1, 2, 26, 27; III. 13, 30,
IV. 3, 10, 11, 12, 13,1 4, 21; V. 9, 16, 26,; VI. 11,
30, 33, 35, 38, 39.

हरिणी—नसमरसला गः षड्वेदैर्हयैर्हरिणी मता (6, 4, 7). G. न स
ल. ग.

I. 20, 23; II. 4; III. 22, 24, 31, 32; IV. 19; V. 29.

शार्दूलविक्रीडित—सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्
G. म स ज स त त, ग.

I. 39; II. 9, 16, 28, 29, 30; III. 16, 37, 43, 45; I
17, 20, 22, 25; V. 6, 14, 19, 28, 35, 36; VI. 18, 40; V

आर्या—VI. 13.

*Prelude.*

Having addressed our salutation to the bards of old we pray for this, that Divine Speech, a portion of the Supreme Soul and immortal, may favour ( be with ) us ( lit. we may obtain her ).

*After the Benediction.*

MANAGER—No more of prolixity. Let me address the respectable gentlemen ( assembled ) to-day at, the festival of the Divine Kálapriyanátha: let it be known to your honours. There is, as you know well, an illustrious scion of Kas'yapa's race, bearing the distinctive title of 'S'rikantha,' versed in the principles of Grammar, Mîmámsà and Logic, Bhavabhúti by name and son of Jâtukarṇî.

'Him, a Bráhmaṇa, the goddess of Speech follows like one enslaved ( obedient to his will, or, follows lovingly as she does Brahmà ); Uttararàmacharita, ( a play ) composed by him will ( now ) be represented.

Here am I turned into a man of that time ( contemporary of Ràma ) and a resident of Ayodhyá as my business requires me to be ( *Casting a glance around* ). Holloa, if this is the coronation-season of the great King Ráma, the destructive comet of the race of Pulastya, when joyous songs with music should go on continuously day and night, how is it that the public stalls are silent?

( *Enter an* ACTOR )

ACTOR—Your honour, His Majesty has sent back to their homes the magnanimous Monkeys and Ràksbasas, his allies in the war of Lankà, as also the Bráhmaṇa and royal sages that had come from various quarters to offer their greetings, in whose honour festivities had continued for so many days.

MANAGER—Ah, this must be the reason.

ACTOR—And this other thing,

The queens, the mothers of Ráma, have gone to be present at a sacrifice, with Arundhati at their head, to the hermitage

King Das'aratha begot a daughter, S'ánta by name, whom he gave in adoption to king Lomapáda.

Rs'yas'rnga, the son of Vibhândaka, espoused her. He has now commenced a sacrifice lasting for twelve years. At his solicitation the elderly matrons have gone there leaving Jânakî, though far advanced in pregnancy.

MANAGER—Why concern ourselves more with this? Come, let us be present at the royal gate as befits the duties of our profession.

ACTOR—Let your honour then think of some excellent (blameless) mode of addressing the king when we approach him.

MANAGER—We should do our best to do our duty; whence can there be exemption from blame? People are wicked (have an evil tongue) as regards the purity of language just as well as the chastity of women.

ACTOR—Exceedingly wicked, you ought to say,

Since people speak ill even of the divine (or, the queen,) princess of Mithilà. Her residence in the house of the Rákshasa serves them as a basis; but they distrust her ordeal (purification) in the fire.

MANAGER—It will be a sad thing if this scandalous talk reaches the king.

ACTOR—The sages and the gods will, in every way, do good! (*Walking about*). Where is the King, eh! (*Listening.*) Thus say the people.

Janaka, who had come through affection to felicitate Ráma, is gone to-day to Videha after having passed these days in festivities; and to console the queen, disconsolate on that account, the king leaves his judgment-seat and enters the inner apartment.

(*Exeunt both*)

END OF THE PRELUDE.

